edited by Pandit R. Shama Sastri B. A. and published in the Mysore Oriental Series. On a comparison of the *Sūtras* with this *Rājanīti*, the debt appears to lie more in the identity of sense of select *sūtras* and verses of the *Rājanīti* than in an out-and-out versification of the *Sūtras* with their words and expressions kept intact as far as possible, e. g.

| *Caṇakya-Sūtra* | | *Cāṇakya-Rājanīti Śāstra* | | | |
|---|---|---|---|---|---|
| No. | 108 | Chapter | I | Śloka | II |
| ,, | 306 | ,, | I | ,, | 44 |
| ,, | 537 | ,, | II | ,, | 1&2 |
| ,, | 215, 519 | ,, | II | ,, | 12 |
| ,, | 296 | ,, | II | ,, | 30 |
| ,, | 297 | ,, | II | ,, | 36 |
| ,, | 472 | ,, | II | ,, | 42 |
| ,, | 255 | ,, | IV | ,, | 13, 15 |
| ,, | 2 | ,, | IV | ,, | 16, 21 |
| ,, | 258 | ,, | IV | ,, | 17 |
| ,, | 257 | ,, | IV | ,, | 25 |
| ,, | 194, 105 & 535 | ,, | IV | ,, | 84 |
| ,, | 48 | ,, | IV | ,, | 38 |

Apart from the question of its borrowings from valued sources, or its affiliation to any particular work of note like the *Cānakya Sūtra*, this manual has an importance of its own. If wise apophthegms clothed in a finished poetic garb have a power to attract, delight, and instruct our minds, it can well claim to be put by the side of such collections as the *Laghu-Cāṇakya* and *Vṛdha-Cāṇakya*.

96, Amherst Street,
CALCUTTA, 1921.

NARENDRA NATH LAW

# चाणक्य-राजनीतिशास्त्रम्

## प्रथमोऽध्यायः

एकदन्तं त्रिनयनं ज्वालानलसमप्रभम् ।
गणाध्यक्षं गजमुखं प्रणमामि विनायकम् ॥ १ ॥
प्रणम्य शिरसा विष्णुं त्रैलोक्याधिपतिं प्रभुम् ।
नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ॥ २ ॥
येन सम्यगधीतेन प्रज्ञा संवर्द्धते नृणाम् ।
सत्यशौचरतो नित्यं हिंसाक्रोधविवर्जितः ॥ ३ ॥
पठित्वैवं शुभं शास्त्रमिदं ज्ञास्यति तत्त्वतः ।
धर्म्मोपदेशं व्याख्यातं कार्य्याकार्य्यं शुभाशुभे ॥ ४ ॥
तदहं सम्प्रवक्ष्यामि यज्ज्ञात्वा पुरुषोऽचिरात् ।
लभते विपुलां कीर्त्तिं न चार्थेन वियुज्यते ॥ ५ ॥
रहस्यभेदं पैशुन्यं परदोषानुकीर्त्तनम् ।
कलहं परनिन्दाञ्च दूरतः परिवर्ज्जयेत् ॥ ६ ॥
शृणुयाद्धर्म्मसर्व्वस्वं श्रुत्वा चैवोपधारयेत् ।
आत्मनः प्रतिकूलानि न परेषां समाचरेत् ॥ ७ ॥
वर्ज्जयेत् क्षुद्रसंवादमरिष्टस्य च दर्शनम् ।
विवादं सह मित्रेण प्रीतिञ्च सह शत्रुभिः ॥ ८ ॥
मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ।
द्विषतां सम्प्रयोगेण पण्डितोऽप्यवसीदति ॥ ९ ॥

कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः ।
कार्य्यं कारणमाश्रित्य कालं क्षिपति पण्डितः ॥ १० ॥
काले संवर्द्धते वीजं काले गर्भं प्रसूयते ।
कालो जनयते पुत्रं पुनः कालोऽपि संहरेत् ॥ ११ ॥
कालात् प्ररोहति विश्वं पुनः कालः प्रवर्त्तते ।
स्थूलसूक्ष्मगतिः कालो विविधं तस्य चोच्यते ॥ १२ ॥
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः स्वप्नेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ १३ ॥
कः कालः कानि मित्राणि को देशः कौ व्ययाव्ययौ ।
को वाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १४ ॥
अदाता पुरुषस्त्यागो धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ १५ ॥
मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण सर्व्वज्ञत्वं प्रपद्यते ॥ १६ ॥
राजानो यज्ञभूमिश्च ब्राह्मणो नट-नर्त्तकौ ।
अवश्यं तत्र गन्तव्यं महापातकनाशनम् ॥ १७ ॥
उत्तमैः सह सङ्गश्च पण्डितैः सह सत्कथाः ।
अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ १८ ॥
परवादं परस्त्रेच्छां परिहासं परस्त्रिया ।
परवेश्मनि वासञ्च न कुर्व्वीत कदाचन ॥ १९ ॥
परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ २० ॥
नारी नश्यति रूपेण तपः क्रोधेन नश्यति ।
स्नेहो दूरप्रवासेन शूद्रान्नेन द्विजोत्तमः ॥ २१ ॥

स बन्धुर्यो हितं युङ्क्ते स पिता पुत्रपोषकः।
तन्मित्रं यत्र सद्भावः स देशो यत्र निर्वृतिः॥ २२॥
स जीवति गुणो यस्य धर्म्मो यस्य स जीवति।
गुणधर्म्मविहीनो यो जीवितं तस्य निष्फलम्॥ २३॥
जीवने यस्य जीवन्ति मित्राणीष्टाः सबान्धवाः।
सफलं जीवितं तस्य आत्मार्थे को न जीवति॥ २४॥
अतिजीवति वित्तेन सुखं जीवति विद्यया।
किञ्चिज्जीवति शिल्पेन ऋते कर्म्म न जीवति॥ २५॥
पिता च ऋणवान् शत्रुः माता शत्रुरशीलिनी।
भार्य्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः॥ २६॥
सा भार्य्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः।
स भृत्यो यस्तु चित्तज्ञस्तद्बीजं यत् प्ररोहति॥ २७॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती॥ २८॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा।
नित्यस्नाता सुगन्धा च नित्यञ्च प्रियभाषिणी॥ २९॥
साध्वी सुशीलसम्पन्ना सुरूपा च गुणान्विता।
देवाग्निगुरुभक्ताच सा भार्य्या भोगमोक्षदा॥ ३०॥
आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्नी सा स्त्री ज्ञेया पतिव्रता॥ ३१॥
अर्द्धं भार्य्या शरीरस्य भार्य्याऽभीष्टमता सुखम्।
भार्य्या मूलं त्रिवर्गस्य भार्य्याऽमेत्रेण नश्यति॥ ३२॥
सदा हृष्टाप्यसन्तुष्टा मिथ्याव्ययपराङ्मुखी।
यस्य शीताङ्गी भार्य्या देवेन्द्रोऽसौ न मानुषः॥ ३३॥

भार्य्यावन्तः क्रियावन्तः सततं गृहमेधिनः ।
भार्य्यामूलं कुलं सर्व्वं तस्माद्भार्य्या परा गतिः ॥ ३४ ॥
देवब्राह्मणभक्ता च नित्यं धर्म्मानुषङ्गिणी ।
यस्य भार्य्या मुदा नित्यं देवेन्द्रोऽसौ न मानुषः ॥ ३५ ॥
सततं मङ्गलैर्युक्ता सततं धर्म्मवत्सला ।
सततं ज्ञानशीला च सततं द्विजपूजका ॥ ३६ ॥
भर्त्तृभक्ता च सततं सर्वसौभाग्यवर्द्धिनी ।
यस्य चैतादृशी भार्य्या देवेन्द्रोऽसौ न मानुषः ॥ ३७ ॥
यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया ।
उत्तरोत्तरदात्री च सा जरा न जरा जरा ॥ ३८ ॥
यस्य भार्य्या सदा दुष्टा परवेश्माभिगामिनी ।
कुचेला त्यक्तलज्जा च सा जरा न जरा जरा ॥ ३९ ॥
नास्तीतिवादिनी नित्यं क्षुत्पिपासासमन्विता ।
भर्त्तृघ्नी निर्द्दया दीना सा जरेति स्मृता बुधैः ॥ ४० ॥
आयान्तं स्वपतिं दृष्ट्वा भक्षयन्ती सदाऽखिलम् ।
परित्यक्ता निजैः पुत्रैर्बान्धवैः स्वजनैस्तथा ॥ ४१ ॥
चौरी स्वामिपरोक्षी च योगिनी स्वाधिकारिणी ।
वाग्भटी चाङ्गदोषा च स्यादसाध्वीति षड्गुणाः ॥४२॥
अश्नीनाश्च सर्वासामालयाः कुत्सितप्रियाः ।
प्रचोरैर्युनं गृह्णन्ति भुञ्जतेऽन्नं तथाविधम् ॥ ४३ ॥
या तु भार्य्या शुचिर्दक्षा मिष्टान्नप्रियवादिनी ।
अप्रमत्ता भर्त्तृभक्ता सा श्रीरित्युच्यते बुधैः ॥ ४४ ॥
दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ४५ ॥

सततं दानधर्म्मा च द्विजशुश्रूषणे रता।
देवाग्निगुरुभक्ता च सा भार्य्या भोगमोक्षदा ॥ ४६ ॥
एवमेवंक्रियायुक्ता सर्वसौभाग्यदायिनी।
यस्यैषा च भवेद्भार्य्या देवेन्द्रोऽसौ न मानुषः ॥ ४७ ॥
मिथ्या वदन्ति विहसन्ति सदार्थहेतोः
आश्वासयन्ति पुरुषं मतिवञ्चनाय।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानघटिका इव वर्ज्जनीयाः ॥ ४८ ॥
न दानेन न मानेन नार्ज्जवेन न सेवया।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ ४९ ॥
जल्पन्ति सार्कमन्येन पश्यन्त्यन्यं सविभ्रमम्।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ५० ॥
अनृतं साहसं माया मूर्खत्वं वञ्चनं तथा।
अशौचं निर्द्दयत्वञ्च स्त्रीणां स्वाभाविका गुणाः ॥
कार्य्येषु मन्त्री करणेषु दासी
स्नेहेषु माता क्षमया धरित्री।
धर्म्मस्य पत्नी शयने च वेश्या
षट्कर्म्मभिः स्त्रीकुलमुद्धरेत्तु ॥ ५२ ॥
अतिप्रचण्डा बहुपाककारिणी
विवादशीला स्वयमेव तस्करी।
आक्रोशबीजा परवेश्मगामिनी
त्याज्या तु भार्य्या दशपुत्रसूरपि ॥ ५३ ॥
व्याली कण्ठप्रदेशे वरमतुलविषोद्गारिणी धारणीया
क्रीडन्त्या वा शिखाग्रे घनरुधिरवसाभीषणा व्याघ्रकन्या।

वह्नेरालिङ्गनीया वरमपि च शिखा काकजिह्वाकराला
न स्त्री सेव्या विदग्धैः परनरगमनभ्रान्तचित्ता विरक्ता ॥ ५४ ॥

शैलेषु तैलं सुकृतं कृतघ्ने
शीतं हुताशे पतनं हिमांशौ ।
उत्पद्यते दैववशात् कदाचित्
वेश्यानुरागः सहजस्तु न स्यात् ॥ ५५ ॥

काकः पद्मवने धृतिं न लभते हंसश्च कूपोदके
क्रोष्टा सिंहगुहान्तरे सुविपुले नीचस्तु भद्रासने ।
कुस्त्री सत्पुरुषं न जातु भजते सा सेव्यते दुर्ज्जनैः
या यस्य प्रकृतिर्विधातृविहिता सा तस्य किं वार्य्यते ॥५६॥

भुजङ्गमे वेश्मनि दृष्टनष्टे
देहे चिकित्साविनिवृत्तरोगे ।
प्रस्तारुते विद्विषि जागरूके
शय्ये प्रकोष्ठान्तरिते धृतिः का ॥ ५७ ॥

स्फुलिङ्गालिङ्गनात् क्रुद्धकृष्णसर्पोपसर्पणात् ।
मकरालयपाताच्च कष्टं नृपतिसेवनम् ५८ ॥

नागो भाति मदेन कं जलरुहैः पूर्णेन्दुना शर्व्वरी
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः ।
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरं
सत्पुत्रेण कुलं फलैर्वसुमती लोकत्रयं शम्भुना ॥ ५९ ॥

इति चाणक्य-राजनीतिशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्याय:

आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि ।
आत्मा तु सर्वतो रक्ष्यो दारैरपि धनैरपि॥१ ॥
आपदर्थे धनं रक्षेच्छ्रीमतां कुत आपद: ।
कदाचित् कुपिता लक्ष्मी: सञ्चितोऽपि विनश्यति ॥ २ ॥
सर्वमेव परित्यज्य शरीरमनुपालयेत् ।
शरीरस्य प्रनष्टस्य सर्वमेव विनश्यति ॥ ३ ॥
पुनरर्थ: पुनर्दारा: पुनर्भृत्या: पुन: सुखम् ।
पुनरन्यानि कर्म्माणि न शरीरं पुन: पुन: ॥ ४ ॥
वरं हि नरके वासो न च दुश्चरिते गृहे ।
नरकात् क्षीयते पापं कुगृहात् परिवर्द्धते ॥ ५ ॥
वरं वनं वरं भिक्षा वरं भारोपजीवनम् ।
वरं मृत्यु: शरीरस्य नाधिकारेण जीवनम् ॥ ६ ॥
वरं तेजस्विनो मृत्युर्न तु मानस्य खण्डनम् ।
मृत्युरेकदिनं हन्ति ह्यपमान: पदे पदे ॥ ७ ॥

वरं दरिद्र: श्रुतिशास्त्रपाठको
न चार्थयुक्त: श्रुतिशीलवर्जित: ।
सुलोचन: जीर्णपटोऽपि शोभते
न नेत्रहीन: कनकाद्यलङ्कृत: ॥ ८ ॥

जनस्याशयमालोक्य यो यथा परितुष्यति ।
तं तथैवानुवर्त्तेत पराराधनपण्डित: ॥ ९ ॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नापरीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ १० ॥

त्यजेत् स्वामिनमत्युग्रमत्युग्रात् कृपणं त्यजेत् ।
कृपणाद्‌विशेषज्ञं सर्वथा परुषाचरम् ॥ ११ ॥
त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनामयम् ॥ १२ ॥
देशं त्यजेद् वृत्तिहीनं सवृत्तिकं समाविशेत् ।
त्यजेत् कृपणभूपालं शत्रुं सामान्यतस्त्यजेत् ॥ १३ ॥
अर्थेन किं कृपणहस्तगतेन तेन
रूपेण किं गुणपराक्रमवर्जितेन ।
मित्रेण किं व्यसनकालपराङ्मुखेन
ज्ञानेन किं बहुशठाधिकमत्सरेण ॥ १४ ॥
अदृष्टपूर्व्वा बहवः सहायाः सर्व्वे पदस्थस्य भवन्ति वश्याः ।
अर्थैर्विहीनस्य पदच्युतस्य भवेद्धि काले स्वजनो हि शत्रुः ॥ १५ ॥
स्थानस्थितस्य पद्मस्य मित्रे सलिलभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेददाहकरावुभौ ॥ १६ ॥
आपत्काले महानर्थे दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ १७ ॥
आपत्सु मित्रं जानीयाद् रणे शूरं रहः शुचिम् ।
भार्य्याञ्च विभवक्षीणे दुर्भिक्षे च प्रियातिथिम् ॥ १८ ॥
वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः ।
पुष्पं पर्य्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः
सर्व्वः कार्य्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः ॥ १९ ॥
लुब्धमर्थप्रदानेन क्रुद्धमञ्जलिकर्म्मणा ।
मूर्खं कथानुवृत्त्या च वशीकुर्व्वन्ति पण्डिताः ॥ २० ॥

उत्तमः प्रणिपातेन शूरो भेदेन युज्यते ।
नीचः स्वल्पप्रदानेन समस्तुल्यपराक्रमैः ॥ २१ ॥
यस्य यस्य हि यो भावस्तस्य तस्य विभाव्यताम् ।
अनुप्रविश्य मेधावी तं तमात्मवशं नयेत् ॥ २२ ॥
प्रस्तावसदृशं वाक्यं स्वभावसदृशं मनः ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ २३ ॥
नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रिणां द्विषाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥ २४ ॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
मानञ्चैवापमानञ्च मतिमान् न प्रकाशयेत् ॥ २५ ॥
कस्य दोषः कुले नास्ति व्याधिना को न पीड़ितः ।
को न वा व्यसनं प्राप्तः कस्य श्रीर्निश्चला भवेत् ॥ २६ ॥
यस्मिन् कर्म्मणि सिद्धेऽपि लभ्यते न फलोदयः ।
असिद्धे तु महद्दुःखं तद्बुधाः कथमाचरेत् ॥ २७ ॥
कोऽर्थान् प्राप्य न गर्वितो भुवि नरः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं वत मनः को नाम राज्ञां प्रियः ।
कः कालस्य मुखान्तरं न च गतः कोऽर्थी गतो गौरवं
को वा दुर्ज्जनवागुरानिपतितः क्षेमेण जातः पुमान् ॥ २८ ॥
यस्मिन् देशे न सम्मानो न प्रीतिर्न च बान्धवाः ।
न च विद्यागमोऽप्यस्ति तत्र वासं न कारयेत् ॥ २९ ॥
धनस्य यस्यास्ति न राजतो वा न चौरतो वापि भयं कदाचित् ।
विद्याख्यमन्तर्धनमर्जयेत्तदन्यद्धनं नश्यति सर्वमेव ॥ ३० ॥
यदर्जितं प्राणहरैः परिश्रमैर्मृतस्य तत्संविभजन्ति रिक्थिनः ।
कृतञ्च यद्दुष्कृतमर्थलिप्सया तदेव दोषोपहतस्य यौतुकम् ॥ ३१ ॥

सञ्चितं क्रतुषु नोपयुज्यते
याचितं गुणवते न दीयते ।
तत् कदर्यपरिगतं धनं
चोरपार्थिवगृहेषु भुज्यते ॥ २२ ॥

सञ्चितं निहितं भूमौ परामृष्टं मुहुर्मुहुः ।
आखोरिव कदर्यस्य धनं दुःखाय केवलम् ॥ २३ ॥

न कल्पते वा परलोकसिद्धये न कीर्त्तये नापि सुखोपभुक्तये ।
तया मनस्तापभुवैव किं श्रिया दुर्भाग्यधियेव स्वपदार्थवन्ध्यया ॥२४॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय दुःखम् ।
कीर्त्तिञ्च दिक्षु वितनोति ददाति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ २५ ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःशुभकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्याऽऽत्मयं सम्बलं
विद्या राजसु पूज्यते बहुधनो विद्याविहीनः पशुः ॥ २६ ॥

अहेरिव गणाद्भीतो मिष्टान्नाच्च विषादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २७ ॥

हन्तुर्याति न गोचरं किमपि यं पुष्णाति सर्वात्मना
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं वृद्धिं परां गच्छति ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्द्धते ॥ २८ ॥

किं तया सुमहत्यापि श्रिया देशान्तरस्थया ।
रिपवो यां न पश्यन्ति सुहृद्भिर्या न भुज्यते ॥ २९ ॥

दीना विवसना रूक्षाः कपालाङ्कितपाणयः ।
दर्शयन्तीह लोकानामदातुः फलमीदृशम् ॥ ४० ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्नाशः ॥ ४१ ॥

नद्यश्च नार्यश्च समस्वभावाः स्वान्तोभभावेन बलाधिकत्वात् ।
तोयैश्च दोषैश्च निपातयन्ति नद्यो हि कूलानि कुलानि नार्य्यः ॥४२॥

न तृप्तिरस्ति मिष्टानामिष्टानां प्रियवादिनाम् ।
सुतानाञ्च सुखानाञ्च जीवितस्य धनस्य च ॥ ४३ ॥

गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा ।
इष्टा भार्य्या प्रियं मित्रमपूर्व्वाणि दिने दिने ॥ ४४ ॥

तृप्येन्न राजा धनसञ्चयेन न सागरो भूमिजलागमेन ।
न पण्डितः साधुसुभाषितेन तृप्येन्न चक्षुः प्रियदर्शनेन ॥ ४५ ॥

स्वकर्मधर्म्मार्ज्जितजीविकानां
स्वेष्वेव दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां
गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ४६ ॥

मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः ।
वासः प्रासादपृष्ठेषु भवन्ति शुभकर्म्मणाम् ॥ ४७ ॥

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
शुभकर्म्माणमायान्ति सहायाश्च धनानि च ॥ ४८ ॥

शनैरर्थः शनैः पन्थाः शनैः पर्वतमारोहेत् ।
शनैर्विद्या च धर्मश्च व्यायामश्च शनैः शनैः ॥ ४९ ॥

शाश्वतं विधिविज्ञानं शाश्वतं सत्यभाषणम् ।
शाश्वती प्रगुणा विद्या सख्यं मित्रञ्च शाश्वतम् ॥ ५० ॥

न भोजने विलम्बो स्यात् न च स्यात् स्त्रीषु सेवकः ।
सुदूरमपि विद्यार्थी व्रजेद्गरुड़वेगवत् ॥ ५१ ॥

ये बालभावे न पठन्ति विद्यां ये यौवनस्था अधना अधीराः ।
ते शोचनीया इह जीवलोके मनुष्यरूपेण मृगाश्चरन्ति ॥ ५२ ॥

येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्म्मः ।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ ५३ ॥

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः
नाऽसौ मुनिर्यस्य मतं न भिन्नम् ।
धर्म्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ५४ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं नृणाम् ॥ ५५ ॥

उदीरितार्थः पशुनापि बुध्यते हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥५६॥

केचिद्भयेन विभजन्ति विनीतभावम्
अन्ये जना विभवलोभकृतप्रयत्नाः ।
केचिच्च साधुजनसंसदि कीर्त्तिलोभात्
सद्भाववान् जगति कोऽपि न साधुरस्ति ॥ ५७ ॥

केचित् स्वभावगुणिनोऽत्र यथा कपित्थाः
वार्त्ताकुपाकसदृशा भुवि सन्ति चान्ये ।
दृष्टा उपायफलतुल्यजड़ास्तथान्ये
तेन त्रिधैव भुवनत्रितयेऽपि सत्त्वाः ॥ ५८ ॥

इति चाणक्य-राजनीतिशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

—०●—

# तृतीयोऽध्याय:

यो ध्रुवाणि परित्यज्य ह्यध्रुवाणि च सेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि॥ १॥

प्रागल्भ्यहीनस्य जनस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते।
न तुष्टिमुत्पादयते परेषाम्
अन्धस्य दारा इव दर्शनीया:॥ २॥

अग्निहोत्रफला वेदा: शीलवृत्तिफलं श्रुतम्।
रतिपुत्रफला दारा दानशक्तिफलं धनम्॥ ३॥

पालयेत् कुलजां प्राज्ञो विरूपामपि कन्यकाम्।
सुरूपा च विरूपा च विवाहे सदृशो वधू:॥ ४॥

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहो मैत्री च न तु पुष्टविपुष्टयो:॥ ५॥

हविर्देवकुलाद्ग्राह्यं बालादपि सुभाषितम्।
अमेध्यात्काञ्चनं ग्राह्यं स्त्रीरत्नं दुष्कुलादपि॥ ६॥

विषादप्यमृतं ग्राह्यं पङ्कादपि सरोरुहम्।
अरिभ्योऽप्युत्तमा विद्या स्त्रीरत्नमकुलादपि॥ ७॥

सर्वस्वगपि गौर्वन्ध्या ग्राह्यो वक्रियतस्तत:।
पयोऽपि चर्म्मगं सौम्यं पुत्र: पूत: स्वदेहज:॥ ८॥

सत्कुले योजयेत्कन्यां मित्रं धर्म्मेण योजयेत्।
व्यसने योजयेच्छत्रून् पुत्रं विद्यासु योजयेत्॥ ९॥

स्थानेष्वेव नियोज्यानि भृत्याश्चाभरणानि च।
नहि चूडामणि: प्राज्ञै: पादादौ प्रतिबध्यते॥ १०॥

कुसुमस्तवकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्द्ध्नि वा सर्वलोकस्य शीर्य्यते वन एव वा ॥ ११ ॥

चूड़ामणिः समुद्रोर्म्मिघट्टनात् खण्डनं वरम् ।
अथवा पृथिवीपालमूर्द्ध्निपादावसारणम् ॥ १२ ॥

वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ १३ ॥

न सदश्वाः कशाघातं न सिंहो घनगर्जितम् ।
परैरङ्गुलिनिर्दिष्टं न सहन्ते मनस्विनः ॥ १४ ॥

सकृद्दुष्टन्तु यो मित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १५ ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ १६ ॥

उपकारशतेनैव दुर्जनः कोऽपि गृह्यते ।
साधुः सम्मानमात्रेण भवत्येवात्मविक्रयी ॥ १७ ॥

अपकारिषु मा पापं चिन्तयस्व महामते ।
स्वयमेव हि नश्यन्ति कूलजाता इव द्रुमाः ॥ १८ ॥

अनर्थोऽप्यर्थरूपेण तथार्थोऽनर्थरूपभाक् ।
उत्पद्यते विनाशाय तस्मादुक्तं परीक्षयेत् ॥ १९ ॥

कार्य्यमालोचितापायं मतिमद्भिर्विचेष्टितम् ।
न केवलं हि सम्पत्तौ विपत्तावपि शोभते ॥ २० ॥

विविच्य स्वात्मनैवादौ पश्चाच्च सह धीमता ।
कार्य्यं कुर्य्यान्न सिध्येत्तत्र वाच्यो विधिर्भवेत् ॥ २१ ॥

धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च ।
आहारव्यवहारेषु त्यक्तलज्जः सदा भवेत् ॥

देवज्ञः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ २३ ॥
लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता ।
तत्र देशे न वस्तव्यं यत्र नास्ति चतुष्टयम् ॥ २४ ॥
ऋणप्रदाता वैद्यस्तु श्रोत्रियः सजला नदी ।
राजा यत्र न विद्यन्ते न कुर्य्यात्तत्र संस्थितिम् ॥ २५ ॥
सुखार्थी च त्यजेद्विद्यां विद्यार्थी च त्यजेत् सुखम् ।
न विद्यासुखयोः सन्धिस्तेजस्तिमिरयोरिव ॥ २६ ॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ २७ ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥ २८ ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलन्ति च परस्यार्थे सत्पथस्था इव द्रुमाः ॥ २९ ॥
दुर्जनैः सह सङ्गेन सज्जनोऽपि विनश्यति ।
जलं प्रसन्नमप्याशु पङ्कैः कर्दमतां नयेत् ॥ ३० ॥
प्रियंवदेऽपि विश्वासो न कार्य्यो दुर्जने क्वचित् ।
धत्तेऽमृतं स जिह्वाग्रे हृदि हालाहलं विषम् ॥ ३१ ॥
दुर्जनस्य मुखे प्रीतिर्वाचि चन्दनशीतता ।
हृदये तस्य दुर्बुद्धिः कुलिशादपि कर्कशा ॥ ३२ ॥
अप्रगल्भाः पदन्यासे जननीरागहेतवः ।
सन्त्येते बहुलालापाः कवयो बालका इव ॥ ३३ ॥
सफलत्वं सपक्षत्वमार्जवं गुणसङ्गतिम् ।
दर्शयन्तः खला घ्नन्ति प्रविशन्तः शरा इव ॥ ३४

दूरात्सङ्कुचितग्रीवो मन्दं मन्दं प्रभाषते ।
शनैश्चरते पादमेतद् धूर्त्तस्य लक्षणम् ॥ ३५ ॥
आमुखं रमणीयानि मध्ये तु विरसानि च ।
अन्ते वैरायमाणानि सङ्गतानि खलैः सह ॥ ३६ ॥
लब्धे ज्ञाने गुरुं द्वेष्टि मखे पूर्णे तु ऋत्विजम् ।
पुत्रे जाते प्रियां द्वेष्टि कृतकार्य्यो हि दुर्जनः ॥ ३७ ॥
तनुरुपकारः साधुषु विकसति परमप्सु तैलविन्दुरिव ।
नीचेष्वसौ महानपि सङ्कुचति यथा घृतं तुहिने ॥ ३८ ॥
सहवसतामप्यसतां जलरुहजलवन्नवत्यसंश्लेषः ।
दूरेऽपि सतां वसतां भवति हि कुमुदेन्दुवत्प्रीतिः ॥ ३९ ॥

कदर्थितस्यापि हि दैन्यवृत्ते-
र्न शक्यते सर्वगुणान् प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा याति कदाचिदेव ॥ ४० ॥

शत्रोरपत्यानि वशङ्गतानि
नोपेक्षणीयानि बुधैर्मनुष्यैः ।
तान्येव कालेन विपत्कराणि
वतासिपञ्चादपि दारुणानि ॥ ४१ ॥

युद्धेषु भाग्यचपलेषु न मे प्रतिज्ञा
दैवं यदिच्छति जयञ्च पराजयञ्च ।
एषा हि मे रणगतस्य दृढप्रतिज्ञा
पश्यन्ति यत्र रिपवो जघनं हयानाम् ॥ ४२ ॥

न सर्ववित् कश्चिदिहास्ति लोके
ज्ञानेन नीचोत्तममध्यमेन ।

ज्ञानेन नीचोत्तममध्यमेन
यो येन जानाति स तेन विद्वान् ॥ ४३ ॥
मधुघटशतसिक्तो स्वादुता नास्ति निम्बे
घृतपलशतहोमैः शीतलत्वं न वह्नेः ।
छलशतपरिक्लिष्टेऽप्यपरे नास्ति शस्यं
त्यजति न च कुभावं दुर्जनः सेवितोऽपि ॥ ४४ ॥
अणुरपि मणिः प्राणत्राणक्षमो विषभक्षणात् ।
शिशुरपि रुष्यन् सिंहसूनुः समाह्वयते गजान् ॥ ४५ ॥
तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनम् ।
प्रकृतिर्महतां ज्ञात्वन्यथा न मूर्त्तिमपेक्षते ॥ ४६ ॥
वरं नरः सत्पुरुषावमानितो
न नीचसम्मानशताभिपूजितः ।
वराश्वपादाभिहतोऽपि शोभते
न गर्द्दभस्योपरिभूषिताकृतिः ॥ ४७ ॥
दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥ ४८ ॥
शिशुरपि निपतति सिंहो मदमलिनकपोलभित्तिगजेषु ।
प्रकृतिरिव सत्त्ववतां न वयस्तेजसो हेतुः ॥ ४९ ॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्व्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः ॥ ५० ॥
कस्यादेशात् क्षपयति तमः सप्तसप्तिः प्रजानां
छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः ।
अभ्यर्थ्यन्ते नवजलमुचः केन वा वृष्टिहेतो-
र्ज्जात्यैवैते परहितविधौ साधवो बद्धकाङ्क्षाः ॥ ५१ ॥

खण्डितं कुट्टितं पिष्टं पुनश्चापि द्रवीकृतम् ।
तथा न लवणं स्वादु गोत्रजे विकृतिः कुतः ? ॥ ५२ ॥

अनुचिते विधिकर्म्मणि युज्यते
शठधिया प्रभुणा सगुणो जनः ।
भवति नान्यगुणापचयस्ततः
पदगतस्य किरीटमणेरिव ॥ ५३ ॥

कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रिगुणो प्रतिबध्यते ।
न स विरौति न चापि विशोभते
भवति योजयितुर्वचनीयता ॥ ५४ ॥

आकोपितोऽपि कुलजो न वदत्यवाच्यं
निष्पीड़ितो मधुरमेव वमेत् किलेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानो
हास्येषु यद्वदति तत् कलहेषु वाच्यम् ॥ ५५ ॥

यत्कृत्वैव वहन्त्यन्तः सन्तः सन्तापसन्ततिम् ।
हेलयेव ह्यसन्तस्तदसन्तः कर्म्म कुर्वते ॥ ५६ ॥

क्रुद्धो गुरुर्वदति यानि पदानि शिष्ये
दावाग्निदाहसदृशानि भवन्ति तानि ।
तान्येव तत्परिचयेन सुशिक्षितानि
पश्चाद्भवन्ति कमलाकरशीतलानि ॥ ५७ ॥

हलशतपरिकृष्टेऽप्यूषरे नास्ति शस्यं
फलिनि परिचयाप्ते नास्ति सम्प्रीतियोगः ।
मधुररससमेते स्वादुता नास्ति निम्बे
निजगुणविरहिण्यो जातयो नैव सन्ति ॥ ५८ ॥

गुणवन्तोऽपि सीदन्ति न गुणग्राहको यदि ।
सगुणः पूर्णकुम्भो हि यथा कूपे निमज्जति ॥ ५९ ॥

यदि भवति विहीनः प्रच्युतो वा स्वदेशात्
न हि खलजनसेवामर्थयत्युत्तमात्मा ।
न तु तृणमुपभुङ्क्ते सः क्षुधार्तोऽपि सिंहः
पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ ६० ॥

दुर्ज्जनवदनविनिर्गतवचनभुजङ्गेन सज्जनो दष्टः ।
तद्विषहरणनिमित्तं प्राज्ञः शान्त्यौषधं पिबति ॥ ६१ ॥

कपिकुलनखमुखखण्डिततरुतलफलभोजनं वरम् ।
न पुनर्धनमदगर्वितमुखभङ्गकदर्थिता वृत्तिः ॥ ६२ ॥

वरमरण्यसरितः पुलिनस्थलो
तरुतले फलमूलजलाशिनः ।
क्षितिरनर्गलबन्धनवाससो
न तु मदान्धनराधमसङ्गमः ॥ ६४ ॥

घृतलवणतैलतण्डुलशाकेन्धनचिन्तया दीनम् ।
विपुलमतेरपि पुंसो नश्यति धीमन्दविभवत्वात् ॥ ६३ ॥

गङ्गातरङ्गजलशीकरशीतलानि
विद्याधराध्यूषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रणयङ्गतानि
येनावसानपरपिण्डरता मनुष्याः ॥ ६५ ॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
सः को नाम गुणोऽनिशं गुणवतां यो दुर्ज्जनैर्नाङ्कितः ॥६६॥

अक्यो वारयितुं जलेन हुतभुक् छत्रेण वर्षातपौ
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्द्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥६७॥
पाण्डित्यस्य विभूषणं मधुरता शौर्य्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रेऽर्पणम् ।
अक्रोधस्तपसः क्षमा प्रभवतो धर्म्मस्य निर्व्याजता
सर्व्वेषान्तु विशुद्धभावचरितं शीलं परं भूषणम् ॥ ६८ ॥
ये तावन्मलयोपकण्ठनिलयास्तेष्विन्धनं चन्दनं
तीरोपान्तनिवासिनां जलनिधे रत्नानि पाषाणवत् ।
काश्मीरेषु निवासिनामपि नृणां नास्त्यादरः कुङ्कुमे
दूरस्थस्य महार्घ्यता परिभवः संवासतो जायते ॥ ६९ ॥
दुर्ज्जनदुःखितमनसां पुंसां सुजनेषु नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फुत्कृत्य भक्षयते ॥ ७० ॥
पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणः शान्त्यै शिरस्यङ्कुशः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायसृष्टिः कृता
कष्टं दुर्ज्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ ७१ ॥
सद्वृत्तोऽप्येष जात्यां सरसफलभरो रत्नकान्त्युज्ज्वलश्रीः
क्लान्तानामार्त्तिहर्त्ताप्यतिशयमधुरास्वादुविश्रामदोऽपि (?)।
हृद्यन्तर्भिन्नभिन्नानवति पृथग्दृशो दाड़िमः कीषगर्भान्
तत्राश्चाश्चन्ति के वा कृतकफलमुखेष्वञ्जसा कर्कशेषु ॥ ७२ ॥
रज्ज्वोरप्युपरि भ्रमन्ति कतिचित्तीव्राभियोगक्षमा-
स्तर्कव्याकरणागमादिनिविड़ाभ्यासः कियत् कौशलम् ।

यद्गाढ़ो विनयो यशो यदमलं यद्वीतरागं मनो
यत् सौजन्यमखण्डितं स हि गुणस्तेनैव विद्वान् जनः ॥ ७४ ॥

इति चाणक्य-राजनीतिशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः

पार्थिवस्यैव वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ।
यथाभिज्ञो महीपालः सम्यग्भूतान् प्रपालयेत् ।
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ २ ॥
दुग्ध्वा हि भुज्यते क्षीरं गां विक्रीय न भुज्यते ।
तद्वद् दुग्धप्रयोगेण भोग्यं राष्ट्रं महीभुजा ॥ ३ ॥
ऊर्द्ध्वं न क्षीरविच्छेदात् पयो धेनोरवाप्यते ॥ ४ ॥
तस्मात् सर्वप्रयत्नेन महीं योगेन पालयेत् ।
पालकस्य यशो लोके बलमायुश्च वर्द्धते ॥ ५ ॥
लिङ्गपूजनधर्म्मात्मा गोब्राह्मणहिते रतः ।
प्रजाः पालयितुं शक्तः स राजा यो जितेन्द्रियः ॥ ६ ॥
राजा कुर्वीत धर्म्मेण धनसञ्चयमेकतः ।
अन्यतस्तेन सततं वर्द्धयेदुत्तमान् द्विजान् ॥ ७ ॥
ॐकारशब्दो विप्राणां यस्य राष्ट्रे प्रवर्त्तते ।
स राजा हि भवेद् योगी व्याधिभिश्च न पीड्यते ॥ ८ ॥
अशनार्थं प्रकुर्व्वन्ति मुनयोऽप्यर्थसंग्रहम् ।
किं न कुर्वन्ति भूपाला येषां कोशवशाः प्रजाः ॥ ९ ॥

सन्धौ विरोधे दाने च यशः स्वात्मसुखोदये ।
अपि मोक्षपरिप्राप्तावर्थो बन्धुर्महीभुजः ॥ १० ॥
न मनुष्यगणः कश्चिद् दृढ़त्वमतिवर्त्तते ।
अरोगभावादन्यत्र मृतकल्पा हि रोगिणः ॥ ११ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स हि पण्डितः ॥ १२ ॥
धनं जातिर्धनं रूपं धनं विद्या धनं यशः ।
किं धनेन विहीनानां याञ्चा निर्जीवितैर्गुणैः ॥ १३ ॥
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ १४ ॥
रूपं वस्त्रैर्बलं भृत्यैरुत्तमं मानमर्थिभिः ।
महाकुलविवाहैश्च कुलं क्रीणाति वित्तवान् ॥ १५ ॥
वित्तायत्ताः सदा धर्म्मा वित्तं कामनिबन्धनम् ।
वित्तायत्तानि विद्यानि वित्तं जीवितवर्द्धनम् ॥ १६ ॥
धनं रूपमवैक्लव्यं धनं कुलं सुमङ्गलम् ।
धनं यौवनमम्लानं धनमायुर्निरामयम् ॥ १७ ॥
गुणा धनेन लभ्यन्ते न धनं लभ्यते गुणैः ।
धनी गुणवतां सेव्यो न गुणा धनिनां क्वचित् ॥ १८ ॥
धनिनो जातिहीनस्य विलसत्युत्तमस्तथा ।
अयोमयस्य खड्गस्य स्वर्ग कोषाद्वहिर्यथा ॥ १९ ॥

वृद्धः प्रसिद्धो विबुधो विदग्धः
शूरः श्रुतिज्ञः कवयः कुलीनाः ।
विलोकयन्तः सधनस्य वक्त्रं
जयेति जीवेति सदा वदन्ति ॥ २० ॥

धनाद्धि धर्म्मः क्रियते धनेन
धनेन धन्या धनिनो भवन्ति ।
धनं विना कामकथैव नास्ति
त्रिवर्गमूलं धनमेव नान्यत् ॥ २१ ॥

स्वगृहेऽपि दरिद्राणां विचक्रः कचकर्कशम् ।
धनिनां परलोकेऽपि प्रेम्नः स्निग्धजना भुवः ॥ २२ ॥

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ।
केनापि नूनं कविना च दृष्टम्
दारिद्र्यमेकं गुणराशिनाशि ॥ २३ ॥

कुत आरभ्य घटते विघट्य क्वापि गच्छति ।
गतिर्न शक्यते ज्ञातुं धनस्य च घनस्य च ॥ २४ ॥

धनिनः सुखिनो नित्यं निर्द्धना दुःखभागिनः ।
धनिनां निर्द्धनानाञ्च विभागः सुखदुःखयोः ॥ २५ ॥

इदं लब्धमिदं नष्टमिदं लप्स्ये मनोरथम् ।
इदं चिन्तयतामेव जीर्णमायुः शरीरिणाम् ॥ २६ ॥

त्यजन्ति मित्राणि धनैर्विहीनम्
पुत्राश्च दाराश्च सुहृज्जनाश्च ।
तमर्थवन्तं पुनराश्रयन्ते-
ऽप्यर्थो हि लोके पुरुषस्य बन्धुः ॥ २७ ॥

यत्रोदकं तत्र चरन्ति हंसाः
तदेव शुष्कं परिवर्जयन्ति ।
प्राप्ते जले तत् पुनराश्रयन्ति
न हंसमित्रेण जलेन भाव्यम् ॥ २८ ॥

चण्डालश्च दरिद्रश्च द्वावेतौ तुलया धृतौ ।
एकः स्वबन्धुभिः स्पृश्यस्तैरपि त्यज्यतेऽपरः ॥ २९ ॥
एतदर्थं हि सौमित्रे ! राज्यमिच्छन्ति भूभुजः ।
यदेषां सर्व्वकार्य्येषु वाचा न प्रतिहन्यते ॥ ३० ॥
यच्छक्तावप्युपेक्षन्ते किञ्चित्तत्रास्ति कारणम् ।
समूलकार्षं कषितुमुपायोऽसौ न मूढ़ता ॥ ३१ ॥
मनस्तापं न कुर्व्वीत विपदं प्राप्य पार्थिवः ।
आत्मनश्चोदयं ध्वंसश्च स्याद्दुःखी सुखी न वा ॥ ३२ ॥
धीराः कष्टमपि प्राप्य न भवन्ति विषादिनः ।
प्रविश्य वदनं राहोः किं नोदेति पुनः शशी ॥ ३३ ॥
गोपयेत् स्वानि रन्ध्राणि पररन्ध्राणि चिन्तयेत् ।
कुसीदेन निवर्त्तेत राज्यमिच्छन्नृपः स्थिरम् ॥ ३४ ॥
लङ्घयेच्छास्त्रमर्य्यादां हेतुवादेन यो नरः ।
स नश्यति पुनः क्षिप्रमिह लोके परत्र च ॥ ३५ ॥
अक्षेषु मृगयायाञ्च स्त्रीषु पाने वृथाटने ।
निद्रायाञ्च निबन्धेन क्षिप्रं नश्यति भूपतिः ॥ ३६ ॥
एकं चक्षुर्विवेको हि द्वितीयं सत्समागमः ।
तौ न स्तो यस्य सः क्षिप्रं मोहकूपे पतेद्ध्रुवम् ॥ ३७ ॥
जात्यन्धो हि वरं राजा न तु शास्त्रविवर्जितः ।
अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥ ३८ ॥
गान्धर्व्वं द्यूतमालेख्यं वाद्यञ्च गुणितालकान् ।
अर्थशास्त्रं धनुर्व्वेदं यत्नाद्धर्येन्महीपतिः ॥ ३९ ॥
अर्जयेज्ज्ञानमर्थांश्च पुमानमरवत् सदा ।
केशेष्विव गृहीतः सन् मृत्युना धर्म्ममाचरेत् ॥ ४० ॥

व्याघ्रीव तिष्ठति जरा परिकर्त्तयन्ती
रोगाश्च शत्रव इव प्रहरन्ति गात्रे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोको न चात्महितमाचरतीति कष्टम् ॥ ४१ ॥

मृदुपवनहताग्रकदलीदलविन्दु-
तड़िज्ज्वलनशिखाकलाप-शरदम्बुदध्वनिवत् ।
जगदतिचञ्चलं सकलमित्यवगम्य बुधाः
पिवन्ति सुभाषितामृतरसं श्रवणाञ्जलिभिः ॥ ४२ ॥

यावत्स्वस्थमिदं शरीरमजरं यावज्जरा दूरगा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव हि बुधैः कार्य्यः प्रयत्नो महान्
सन्दीप्ते भवनेऽपि कूपखननप्रत्युद्यमः कीदृशः ? ॥ ४३ ॥

क्षणं सम्पदियं सुदुर्लभा
प्रतिलब्धा पुरुषार्थसाधनी ।
यदि नात्र विचिन्वते हितं
पुनरप्येष समागमः कुतः ? ॥ ४४ ॥

सत्यं मनोरमः कामः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ४५ ॥

क्षणक्षयिनि कायेऽस्मिन्नलक्ष्यपरिणामिनि ।
परोपकारसारैव जन्मयात्रा शरीरिणाम् ॥ ४६ ॥

ऐश्वर्य्यमध्रुवं प्राप्य ध्रुवे धर्म्मे मतिं कुरु ।
क्षणादेव विनाशिन्यः सम्पदोऽप्यात्मना सह ॥ ४७ ॥

यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।

तथा जनोऽयं बहुशास्त्रपाठी
शास्त्रस्य वेत्ता न तु निश्चयस्य ॥ ४८ ॥

मातापितृमयो बाल्ये यौवने दयितामयः ।
तदपत्यमयः शेषे मूढ़ो नात्ममयः क्वचित् ॥ ४९ ॥

येनार्जिता स्त्रियो भृत्याः पुत्रा मित्राणि बान्धवाः ।
तेनार्जिता समस्तेयं चतुरन्ता वसुन्धरा ॥ ५० ॥

वश्याः पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ।
यस्येन्द्रियाणि गुप्तानि तस्य श्रीर्वृणुते हितम् ॥ ५१ ॥

उद्योगः साहसं धैर्य्यं बुद्धिशक्तिः पराक्रमः ।
उत्साहः षड्विधो यस्य तस्य देवोऽपि शङ्कते ॥ ५२ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ५३ ॥

क्वचिद्वित्तं क्वचिद्भूमिं क्वचिद्भृत्यान् क्वचिद्बलम् ।
दत्त्वा तु साधयेत्कार्य्यं न हानिं परिकल्पयेत् ॥ ५४ ॥

लुब्धकेन वनं गत्वा सुतस्यार्थे सुतो हतः ।
सर्व्वनाशे समुत्पन्ने ह्यर्द्धं त्यजति पण्डितः ॥ ५५ ॥

लोका यथा किल तथा न हि भूपतिः स्यात्
सद्भूपतिः खलु यथैव तथैव लोकाः ।
धर्म्मप्रवृत्तिरथ तद्विपरीतवृत्तिः
कृत्स्ने जने नरपतिः प्रभवत्यशेषम् ॥ ५६ ॥

राज्ञि धर्म्मिणि धर्म्मिष्ठः पापे पापः समे समः ।
राजानमनुवर्त्तेरन् यथा राजा तथा प्रजाः ॥ ५७

अनाथानां नाथो गतिरगतिकानां व्यसनिनां
विनीतो भीतानामभयमधृतीनां भरवशः ।

सुहृद्बन्धुः स्वामी शरणमुपकारी वरगुरुः
पिता माता भ्राता जगति पुरुषो यः स नृपतिः ॥ ५८ ॥

उत्खातान् प्रतिरोपयन् कुसुमितान् चिन्वन् लघून् वर्द्धयन्
अत्युच्चान् नमयन् पृथून् विदलयन् विश्लेषयन् संहतान् ।
तीक्ष्णान् कण्टकिनो बहिर्नियमयन् स्वान् रोपितान् पालयन्
मालाकार इव प्रयोगनिपुणो राज्ये चिरं तिष्ठति ॥ ५९ ॥

इति चाणक्य-राजनीतिशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः

परीक्ष्य प्रथमं भृत्यान् उत्तमाधममध्यमान् ।
योजयेत्तादृशेष्वेव नृपपिः स्वेषु कर्म्मसु ॥ १ ॥

यथा चतुर्भिः कनकं परीक्ष्यते-
ऽघमर्षणच्छेदनतापताड़नैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते
कुलेन शीलेन गुणेन कर्म्मणा ॥ २ ॥

कुलशीलगुणोपेतः सत्यधर्म्मपरायणः ।
रूपेण सुप्रसन्नश्च सेनाध्यक्षो महीपतेः ॥ ३ ॥

इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी महार्थश्च प्रतीहारः स उच्यते ॥ ४ ॥

मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रार्थतत्त्वज्ञो लिपिज्ञः साधुलेखकः ॥ ५ ॥

समानि समशीर्षाणि घनानि वर्तुलानि च ।
मात्रासु प्रतिबद्धानि यो जानाति स लेखकः ॥ ६ ॥
प्रगल्भो बुद्धिमान् वक्ता परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च दूत इत्यभिधीयते ॥ ७ ॥
महानदीप्रतरणं महापुरुषविग्रहम् ।
महाजनविरोधञ्च दूरतः परिवर्जयेत् ॥ ८ ॥
प्रवीणः स्वामिभक्तश्च सत्यवादी जितेन्द्रियः ।
अलुब्धोऽल्पधनैस्तुष्टो गजाध्यक्षो महीपतेः ॥ ९ ॥
पितृपैतामहो दक्षः शास्त्रज्ञो मिष्टपाचकः ।
शौचयुक्तः प्रभोर्भक्तः सूपकारोऽभिधीयते ॥ १० ॥
आयुर्वेदकृताभ्यासः सर्वत्र प्रियदर्शनः ।
दृष्टलक्ष्मा सुशीलश्च प्राज्ञश्च भिषगुच्यते ॥ ११ ॥
ज्ञानविज्ञानसम्पन्नः प्रियवादी जितेन्द्रियः ।
सम्यग्विद्योपदेशी च शुचिराचार्य्य उच्यते ॥ १२ ॥
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्व्वादपरो नित्यं पार्थिवस्य पुरोहितः ॥ १३ ॥
लेखकः पाठकश्चैव गणकः प्रतिबोधकः ।
ग्रहमन्त्रप्रयोक्ता च कालज्ञो राज्ञ उच्यते ॥ १४ ॥
गणितज्ञो लिपिवेत्ता श्रुतिस्मृतिपरायणः ।
ब्राह्मणो ग्रहमन्त्रज्ञो देववत् सोऽपि राध्यकः ॥ १५ ॥
अदीर्घसूत्रः स्मृतिमान् कृतज्ञो नीतिशास्त्रवित् ।
धीमानायतिदर्शी च मन्त्री राज्ञः सुसन्निधिः ॥ १६ ॥
खञ्जः कुब्जो मन्दबुद्धिर्वृद्धोऽसक्तो जितेन्द्रियः ।
निस्पृहश्च प्रयोक्ता च राज्ञोऽन्तःपुररक्षकः ॥ १७ ॥

अलसं मुखरं स्तब्धं क्रूरं व्यसनिनं शठम्।
असन्तुष्टमभक्तञ्च त्यजेद् भृत्यं नराधिपः॥ १८॥
क्रूरं व्यसनिनं लुब्धमप्रगल्भमनाक्रतम्।
दुर्म्मतिं पापकर्म्माणं नाधिकारे नियोजयेत्॥ १९॥
द्विजिह्वमुद्वेगकरं दुर्द्धर्षमतिदारुणम्।
खलस्याहेश्च वदनमपकाराय केवलम्॥ २०॥

अकारणाविष्कृतवैरदारुणात्
खलाद्भयं यस्य न नाम जायते।
विषं महाहेरिव यस्य दुर्वचः
सुदुःसहं सन्निहितं सदा मुखे॥ २१॥

तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते॥ २२॥
भ्रातः! कोकिलकूजितैरलमलं नार्हत्यनार्थो गुणं
तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित् कोटरे।
उद्यानद्रुमवाटिका कटरटत्काकावलीसंकुला
कालोऽयं शिशिरस्य सम्प्रति सखे नायं वसन्तोत्सवः॥ २३॥
भ्रातः! कोकिल भीत भीत इव किं पत्राहतो वर्त्तसे
नीचैः पश्य सखे! पुनः पुनरितो धावन्ति लुब्धार्भकाः।
का भीतिस्तव यत् कुहूरिति पुनर्विद्या मधुस्यन्दिनी
किं क्रूरे गुणगौरवं किमसतीचित्ते पतिप्रेमता॥ २४॥

गाम्भीर्य्ययुक्ता मृदुमन्दवाक्या
जितेन्द्रियाः सत्यपराः सुयोग्याः।
भाव्यर्थतज्ज्ञा विदितार्थतत्त्वाः
प्रायेण भृत्याः कृतिनां भवन्ति॥ २५॥

निरालस्याः सुसन्तुष्टाः सुस्वप्नाः सुप्रबोधिनः ।
सुखदुःखसमा धीरा भृत्या जगति दुर्लभाः ॥ २६ ॥
दम्भाश्रितान् कपटिनो हिंसानुग्राहवर्जितान् ।
अप्रज्ञान् भयभीतांश्च राजा भृत्यान् विवर्जयेत् ॥ २७ ॥
घास इन्धनमन्नाद्यं शस्त्राणि विविधानि च ।
दुर्गे प्रवेशनीयानि सततं शत्रुशङ्कया ॥ २८ ॥
षण्मासमथवा वर्षं सन्धिं कुर्य्यान्नराधिपः ।
आत्मनो बलमालोक्य पश्चाच्छत्रुं निपातयेत् ॥ २९ ॥
मन्त्रिवर्गेषु सारोऽयं दृश्यि नित्यं प्रसन्नता ।
मुखे वहति माधुर्य्यं हृदये कार्य्यनिश्चयम् ॥ ३० ॥
स्कन्धेनापि वहेच्छत्रुं यावत्कालविपर्य्ययः ।
तमेव काले सम्प्राप्ते भिन्द्याद्घटमिवाश्मनि ॥ ३१ ॥
प्राज्ञं नियोजयेत्कार्य्ये ततो राज्ञस्त्रयो गुणाः ।
यशश्चैव तथा स्वर्गः पुष्कलश्च धनागमः ॥ ३२ ॥
नियोज्य मूर्खं कार्य्ये च राज्ञो दोषास्त्रयस्तथा ।
अयशश्चार्थनाशश्च नरके पतनं तथा ॥ ३३ ॥
यत्किञ्चित् कुरुते भृत्यः शुभं वा यदि वाऽशुभम् ।
सुकृतं वर्त्तते तेन राज्ञो दुष्कृतमेव च ॥ ३४ ॥
असहायस्य कार्य्याणि सिद्धिं नायान्ति कानिचित् ।
तस्मात् समस्तकार्य्येषु सहायो भूपतेः मतः ॥ ३५ ॥
गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ।
पण्डितेषु गुणाः सर्व्वे मूर्खे दोषाश्च केवलाः ॥ ३६ ॥
सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥ ३७ ॥

पण्डितैश्च विनीतैश्च धर्म्मज्ञैः सत्यवादिभिः।
बन्धनेऽपि वसेत्साद्धं न तु राज्ये खलैः सह ॥ ३८ ॥
कार्य्यार्थी सङ्गतिं याति कृतार्थे नास्ति सङ्गतिः।
तस्मात्सर्वाणि कार्य्याणि सावशेषाणि कारयेत् ॥ ३९ ॥
यथा क्रमेण गृह्णन्ति पुष्पेभ्यो मधु षट्पदाः।
तथा वित्तमुपादाय राजा कुर्वीत सञ्चयम् ॥ ४० ॥
वल्मीकं मधुजालञ्च शुक्लपक्षे च चन्द्रमाः।
भिक्षाद्रव्यं नृपद्रव्यं स्तोकं स्तोकेन वर्द्धते ॥ ४१ ॥
वज्रादग्न्यकृतं प्रणश्यति भयं श्रीः पद्मरागाद्भवेत्।
नानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः।
एकैकं क्रियते प्रभावनिचयात् कर्म्मेति रत्नैः सदा
पुंरत्नैर्मुहुरप्रमेयमहिमोद्दृत्तैर्न किं साध्यते ॥ ४२ ॥
अरण्यरुदितं कृतं स्वशरीरमुद्वर्त्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम्।
श्वपुच्छमवनामितं वधिरकर्णजापं कृतं
कृतान्धमुखमण्डनायाऽधमो जनः सेवितः ॥ ४३ ॥
अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम्।
अवन्ध्यं दिवसं कुर्य्याद्दानाध्ययनकर्म्मभिः ॥ ४४ ॥
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४५ ॥
आयाद्विभागतः कुर्य्याद्व्ययं धर्म्मपरो नरः।
एतदेव हि पाण्डित्यं यदायादल्पको व्ययः ॥ ४६ ॥
वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।

अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ४७ ॥
वरं विन्ध्याटव्यामनशनतृषार्त्तस्य मरणं
वरं सर्पाकीर्णे तृणपिहितकूपे निपतनम् ।
वरं भ्रान्तावर्त्ते गहनजलमध्ये विलयनं
न शीलस्य भ्रंशो विपुलचरितस्य श्रुतवतः ॥ ४८ ॥

इति चाणक्य-राजनीतिशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः

ददध्वं दानमनिशं माऽभुवन् कृपणा जनाः ।
भाग्यक्षयेण क्षीयन्ते नोपभोगेन सम्पदः ॥ १ ॥
कृपणस्य समो दाने न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि परेभ्यो यत्प्रयच्छति ॥ २ ॥
चला विभूतिः क्षणभङ्गि यौवनं
कृतान्तदन्तान्तरवर्त्ति जीवनम् ।
तथाप्यवज्ञा परलोकसाधने-
ष्वहो नृणां विस्मयकारि चेष्टितम् ॥ ३ ॥
अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं
मानुष्यं जललोलविन्दुचपलं फेनोपमं जीवनम् ।

धर्म्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ॥ ४ ॥
देहि देहीति वदतो देहि देहीति याचतः ।
एकमेव वचस्तत्र कियती सारफल्गुता ॥ ५ ॥
न प्रदानैः क्षयं यान्ति नोपभोगैन सम्पदः ।
पूर्व्वार्जितानामन्यत्र सुकृतानां क्षयं विना ॥ ६ ॥
भाग्यवान् जायतां पुत्रो मा शूरो मा च पण्डितः ।
शूराश्च कृतविद्याश्च वने शुष्यन्ति मत्सुताः ॥ ७ ॥
एते चापीन्द्रतुल्याः क्षितिपतितनया भीमसेनार्ज्जुनाद्याः
शूराः सत्यप्रतिज्ञा दिनकररुचयः केशवेनोपगूढ़ाः ।
ते दृष्टा पात्रहस्ता जगति कृपणवद् भैक्षचर्य्यानुयाताः
कः शक्तो भालपट्टे विधिकरलिखितां कर्म्मलेखां प्रमार्ष्टुम् ॥८॥

क्रुद्धोऽपि कः कस्य करोति दोषं
तुष्टोऽपि कः कस्य गुणं करोति ।
स्वकर्म्मसूत्रैर्ग्रथिता हि सर्व्वे
कर्त्ता करोतीति वृथाभिमानः ॥ ९ ॥

यन्मनोरथगतेरगोचरं
यत् स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा
हेलयैव विदधाति तद्विधिः ॥ १० ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारनिचये क्षिप्तो महान् सङ्कटे ।
रुद्रो येन पिनाकपाणिरनिशं भिक्षाचरः कल्पितः
सूर्य्यो भ्राम्यति यद्वशेन गगने तस्मै नमः कर्म्मणे ॥ ११ ॥

दाता बलिर्याचनको मुरारिः,
दानं मही वाजि मखस्य मध्ये ।
दातुः फलं बन्धनमेव दृष्टं
नमोऽस्तु देवाय यथेष्टकर्त्रे ॥ १२ ॥

माता यदि भवेल्लक्ष्मीः पिता यदि जनार्द्दनः ।
नार्थसम्प्रतिपत्तिः स्याद्विना प्राक् पुण्यकर्म्मणा ॥ १३ ॥

आसीमान्तान्निवर्त्तन्ते सुहृदः सह बन्धुभिः ।
सुकृतं दुष्कृतं वापि गच्छन्तमनुगच्छति ॥ १४ ॥

सहवर्द्धितयोर्नास्ति सम्बन्धः प्राणकाययोः ।
पुत्रमित्रकलत्रेषु सम्बन्धे तु कथैव का ? ॥ १५ ॥

नो तत्र कश्चिदनुयाति सुहृन्न बन्धुः
नार्थः प्रयत्ननिचितो न च भृत्यवर्गः ।
यस्मिन् क्षणे प्रियशतानि विसृज्य पुंसां
प्राणाः स्वकर्म्मफलभोगधनाः प्रयान्ति ॥ १६ ॥

लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः
स्थित्यर्थं शितिकण्ठमभ्युपगतस्तेनापि मूर्द्ध्ना धृतः ।
पूर्णः शीतकरस्तथापि जरति क्षीणं परं प्रत्यहं
प्रायः प्राक्तनकर्म्म एव बलवत्कस्योपकुर्व्वीत कः ? ॥ १७ ॥

उत्पतन्त्वन्तरीक्षं वा पातालं प्रविशन्तु वा ।
चरन्तु च दिशः सर्वा अदत्तं नोपलभ्यते ॥ १८ ॥

दुर्गं त्रिकुटः परिखा समुद्रो
रक्षांसि योधा धनदश्च भृत्यः ।
सञ्जीवनी यस्य मुखाग्रविद्या
स रावणः कालवशाद्विपन्नः ॥ १९ ॥

नैवान्तरीक्षे न समुद्रमध्ये
न पर्वतानां विवरप्रदेशे ।
नो वा स्वदेशे भुवि किञ्चिदस्ति
यत्र स्थितं कर्म्म न बाधते स्वम् ॥ २० ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगाः
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्म्मैकफलदः ।
फलं कर्म्मायत्तं किममरगणैः किञ्च विधिना
नमस्तत्कर्म्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २१ ॥

पुराधीता च या विद्या पुरा दत्तञ्च यद्धनम् ।
पुरा कृतञ्च यत्कर्म्म ह्यग्रे धावति धावति ॥ २२ ॥

भवितव्यं भवत्येव कर्म्मणामेव निश्चयः ।
अभाव्यं न भवत्येव चित्ते किं खिद्यसे वृथा ? ॥ २३ ॥

आगमिष्यन्ति ते भावा ये भावा मयि भाविनः ।
मया तैरनुगन्तव्यं न तेषामन्यतो गतिः ॥ २४ ॥

अघटितं घटनां नयति ध्रुवं
सुघटितं क्षणभङ्गुरचापलम् ।
जगदिदं कुरुते सचराचरं
विधिरहो बलवानिति मे मतिः ॥ २५ ॥

शशिदिवाकरयोर्ग्रहपीड़नं
गजभुजङ्गमयोरपि बन्धनम् ।
मतिमताञ्च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ २६ ॥

स एवाहं पार्थस्तदपि वरलब्धं धनुरिदं
त एवामी वाणाः प्रमथितसुरारातिपृतनाः ।

समस्ता वृष्णीनां हलधरमुखानां युवतयो
ह्रियन्ते गोपालैर्विधिरथ बलीयान्न पुरुषः ॥ २७ ॥

इयं कटी मत्तगजेन्द्रगामिनी
विचित्रसिंहासनसंस्थिता सदा ।
अनेकरामाजनलालिता परं
विधेर्वशात्सैकवती प्रजार्थिनी ॥ २८ ॥

सदृशे पुरुषत्वेऽपि करपादौ शिरोदरे ।
एकः प्रभुः परो दास इति दैवं विजृम्भितम् ॥ २९ ॥
कर्म्माण्येव प्रधानानि न नक्षत्रं न वा ग्रहाः ।
वसिष्ठदत्तलग्नापि जानकी दुःखभागिनी ॥ ३० ॥
न पितुः कर्म्मणा पुत्रो न पिता पुत्रकर्म्मणा ।
स्वकृतेनैव सम्पत्तिं विपत्तिं चोपभुञ्जते ॥ ३१ ॥
कर्म्मजाः प्रभवन्त्येव यथाकालमुपद्रवाः ।
एतत्तु कष्टं यज्जन्तुः कर्त्ताहमिति मन्यते ॥ ३२ ॥
अनिच्छन्नपि चित्तेन विदेशस्थोऽपि मानवः ।
स्वकर्मोत्पातवातेन नीयते यत्र तत् फलम् ॥ ३३ ॥
कर्म्मणा तत्त्वकारेण मनुष्यो यत्तु पुत्रिका ।
वासनारज्जुमाश्रित्य सर्वकर्म्मसु चोदितः ॥ ३४ ॥

प्राग्दत्तमर्थं लभते मनुष्यो
देवोऽपि तं वारयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत् परेषाम् ॥ ३५ ॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।

सुप्तं प्रबुद्धं विषमस्थितं वा
रक्षन्ति कर्माणि पुरा कृतानि ॥ ३६ ॥
न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति धिया संयोजयन्ति तम् ॥ ३७ ॥
धर्महेतोस्त्यजेदर्थं न धर्मन्त्वर्थकारणात् ।
इहैव हि त्यजत्यर्थो धर्मोऽमुत्रापि तिष्ठति ॥ ३८ ॥
अर्थार्थी यानि कष्टानि सहते कृपणो जनः ।
तान्येव यदि धर्मार्थी न पुनः क्लेशभाग्भवेत् ॥ ३९ ॥
सर्वेषामेव शौचानामर्थशौचं प्रशस्यते ।
योऽर्थे शुचिः स हि शुचिर्नमृद्वारैः शुचिः शुचिः ॥ ४० ॥
सर्वभूतदया शौचं शौचमिन्द्रियनिग्रहः ।
सत्यं शौचं मनःशौचं जलशौचन्तु पञ्चमम् ॥ ४१ ॥
न मृद्भारसहस्रेण नोदकुम्भशतेन च ।
पञ्चगव्यघटैर्वापि भावदुष्टो न शुद्ध्यति ॥ ४२ ॥
प्रसन्नचित्तः स्वयमेव तुष्यति
प्रभुः शिवस्याघ्र्यदलप्रपूजनात् ।
न कोटिसौवर्णकुशेशयार्चनात्
अशुद्धबुद्धिः शरदां शतैरपि ॥ ४३ ॥
न काष्ठे विद्यते देवो न पाषाणे न मृण्मये ।
भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ४४ ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ ४५ ॥
न प्रहृष्यति सम्मानैर्नावमानैः प्रकुप्यति ।
गङ्गोदकमिवाक्षोभ्यो यः सः पण्डित उच्यते ॥ ४६ ॥

दरिद्रस्य मनुष्यस्य प्राज्ञस्यायतिदर्शिनः ।
हितमप्युचितं वाक्यमवलिप्तेन गृह्यते ॥ ४७ ॥

क्वचिद्भूमौ शेते क्वचिदपि च पर्य्यङ्कशयने
क्वचिच्छाकाहारी क्वचिदपि च मांसोदनरुचिः ।
क्वचित्कन्थाशाली क्वचिदपि विचित्राम्बरधरो
मनस्वी कार्य्यार्थी गणयति न दुःखं न च सुखम् ॥ ४८ ॥

जिह्वे ! वदसि निःस्नेहं मधुरं किं न भाषसे ।
मधुरं वद कल्याणि ! लोकोऽयं मधुरप्रियः ॥ ४९ ॥

किं किं नोपकृतं तेन किं न दत्तं महात्मना ।
प्रियं प्रसन्नवक्त्रेण प्रथमं येन भाषितम् ॥ ५० ॥

बाल्ये वयसि यः शान्तः स शान्त इति कथ्यते ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ ५१ ॥

बाल एवाचरेद्धर्म्ममनित्यं खलु जीवितम् ।
फलानामिव पक्वानां शश्वत्पतनतो भयम् ॥ ५२ ॥

पश्य धर्म्मस्य माहात्म्यं क्रियमाणस्य नित्यशः ।
आत्मनः कुरुते श्रेयो लोकस्य भवति प्रियः ॥ ५३ ॥

यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ५४ ॥

न मन्त्रेण न वीर्य्येण न धिया पौरुषेण च ।
अलभ्यं लभते जन्तुस्तत्र का परिदेवना ॥ ५५ ॥

सम्भूतः पञ्चधा कायो यदि पञ्चत्वमाप्नुयात् ।
कर्म्मभिः स्वात्मचरितैस्तत्र का परिदेवना ॥ ५६ ॥

यौवनं जरया ग्रस्तमारोग्यं व्याधिपीड़ितम् ।
मृत्युर्ग्रसति भूतानि किं धीर इव भाषसे ? ॥ ५७ ॥

इच्छन्ति केचिन्नरकेषु वासं
नेच्छन्ति केचिन्नरकेषु वासम् ।
श्रेयो हि तस्मान्नरकं विशिष्टं
न गर्भवासात् परमं हि दुःखम् ॥ ५८ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ५९ ॥
एकस्वार्थप्रयत्नानां सर्व्वेषां तत्र गामिनाम् ।
एकश्चेत्त्वरितं याति तत्र का परिदेवना ॥ ६० ॥
एकविंशतिर्निर्द्दिष्टा नरकाः शास्त्रपारगैः ।
गर्भवाससमीपे ते कलां नार्हन्ति षोड़शीम् ॥ ६१ ॥
शीतमुष्णं क्षुधा तृष्णा गर्भवासेषु दारुणाः ।
गर्भवासादृते नान्यत् कष्टात् कष्टतरं महत् ॥ ६२ ॥
कामः क्रोधस्तथा लोभो देहे तिष्ठन्ति तस्कराः ।
ते मुष्णन्ति जगत् सर्वं तस्माज्जाग्रत जाग्रत ॥ ६३ ॥
यो हि मानुष्यमासाद्य कर्म्मभूमिं सुदुर्लभाम् ।
न करोत्यात्मनः श्रेयः स पश्चात् परितप्यते ॥ ६४ ॥
मातुर्गर्भपरिभ्रष्टो मग्नः संसारसागरे ।
दुःखेन लभते जन्म मानुष्ये च पुनः पुनः ॥ ६५ ॥
एकवृक्षे यथा रात्रौ नानापक्षिसमागमः ।
प्रातर्दश दिशो यान्ति तद्वङ्गसमागमः ॥ ६६ ॥

दुःखं परं बालकचेष्टितञ्च
मध्यं हि चान्तं जरया निरस्तम् ।
एतानि दुःखानि बहूनि लोके
चित्राणि संस्मृत्य न किञ्चिदिष्टम् ॥ ६७ ॥

दृष्टा बालकचेष्टा यौवनदर्पोऽथ वृद्धवैराग्यम्।
सापि गता सोऽपि गतस्तदपि गतं स्वप्नमायेयम्॥ ६८॥

अहो भार्य्या अहो पुत्त्रः अहो आत्मा अहो सुखम्!
अहो माता अहो भ्राता पश्य मायाविमोहितम्॥ ६९॥

कस्य माता कस्य पिता कस्य बन्धुर्महामुने!
विभ्रमश्च स्मृतिभ्रंशस्तेन मुह्यन्ति जन्तवः॥ ७०॥

अर्थं धिगस्तु बहुवैरिकरं नराणां
राज्यं धिगस्तु भयदं बहु चिन्तनीयम्।
स्वर्गं धिगस्तु पुनरागमनप्रवृत्तिं
धिग् धिक् शरीरमपि रोगसमाश्रयञ्च॥ ७१॥

बीजं पिता क्षेत्रमहो जनित्री
वर्णाणि कर्म्माणि शुभाशुभानि।
भूतानि पञ्च प्रतिमानि लोके
जातानि यातानि च तानि तानि॥ ७२॥

आधूमादिहनिवर्त्तन्ते सुहृदो बान्धवैः सह।
येन तत् सह गन्तव्यं तत् कर्म्म सुकृतं कुरु॥ ७३॥

गृहादर्था निवर्त्तन्ते श्मशानान्मित्रबान्धवाः।
येन तत् सह गन्तव्यं तत् कर्म्म सुकृतं कुरु॥ ७४॥

अज्ञानवरपक्षेन प्रसुप्तो नरगर्द्दभः।
कः समर्थः प्रबोद्धुं तं ज्ञानभेरीशतैरपि॥ ७५॥

मनोरथः पिता नित्यं धृतिर्माता श्रुतिः सखा।
व्यवसायश्च मे भ्राता इत्येते मम बान्धवाः॥ ७६॥

प्रातर्मूत्रपूरीषाभ्यां मध्याह्ने क्षुत्पिपासयोः।
तृप्ताः कामेन बाध्यन्ते निद्रया निशि जन्तवः॥ ७७॥

पुरन्दरसहस्राणि चक्रवर्त्तिशतानि च ।
प्रवासितानि कालेन प्रदीप इव वायुना ॥ ७८ ॥
अज्ञानेनावृतो लोको लोभेन च वशीकृतः ।
सङ्गेन बहुभिर्नष्टस्तेन स्वर्गं न गच्छति ॥ ७९ ॥
गृहेऽप्यर्थान् परित्याज्य श्मशाने मित्रबान्धवान् ।
नग्नश्च रिक्तहस्तश्च प्रयाति मूषितो यथा ॥ ८० ॥
जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयम् ।
तदा संसारभोगेऽस्मिन् कामं राजतु मे मनः ॥ ८१ ॥
अहीन्द्रान् पातालाद्विषमिव निमज्ज्योद्धरति यः
य आरुह्य स्वर्गं कवलयति सेन्द्रान् सुरगणान् ।
महीं भ्रान्त्वा भ्रान्त्वा रघुनलनृपा येन विजिताः
स मृत्युः कालं न क्षमत इति मा कार्ष्ट मनसि ॥ ८२ ॥
न बालेषु स्नेहं वहति न जरत्स्वादरनवं
न दाक्षिण्यच्छाया युवतिषु न शास्त्रेषु करुणा ।
य एवं निस्सीमा तरुणहृदयः पीनकठिनः
स मृत्युः कालं न क्षमत इति मा कार्ष्ट मनसि ॥ ८३ ॥

परिहर मनसा सुवर्णचिन्तां
कुरु हरिपूजनमेव सारम् ।
यमभटकरपतितानां नराणां
भवति न हेमशतैः क्षणं विमुक्तिः ॥ ८४ ॥

नासातो निर्गतस्यापि श्वासस्य च महामुने !
प्रवेशे प्रत्ययो नास्ति प्रातरागमनं कुतः ? ॥ ८५ ॥
अरे ! वद हरेर्नाम क्षेमधाम क्षणे क्षणे ।
बहिर्निर्यांति निःश्वासो विश्वासः को निवर्त्तने ॥ ८६ ॥

न प्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ८७ ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ८८ ॥
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ ८९ ॥
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वयं स्वकाले पच्यन्ते तथा कर्म्माणि देहिनाम् ॥ ९० ॥
नैवाकृतिः फलति नैव कुलं न शीलं
विद्या सहस्रगुणितापि न वाग्विशुद्धिः ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९१ ॥
न भवेद्धुविपाकेऽपि प्रलयः समयं विना ।
प्रसूनमप्यसून् हन्ति जन्तोः प्राप्तावधेः पुनः ॥ ९२ ॥
किं वा कुलेन विपुलेन गुणैश्च तैस्तैः
शौर्य्येण क्वत्यमिह नास्ति न च श्रुतेन ।
कर्माणि पूर्व्वविहितानि फलन्ति काले
दैवेन यानि लिखितानि ललाटपट्टे ॥ ९३ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्व्वकृतं कर्म कर्त्तारमनुविन्दति ॥ ९४ ॥
खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यति ॥ ९५ ॥
पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य्य खलु पश्यामि पानीयं निर्भयं सुखम् ॥ ९६ ॥

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥ ८७ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं मनुष्याणाञ्चक्रवत् परिवर्त्तते ॥ ८८ ॥

शशिनि खलु कलङ्कः कण्टकं पद्मनाले
युवतिकुचनिपातः पक्कता केशजाले ।
उदधिजलमपेयं पण्डिते निर्द्धनत्वं
वयसि धववियोगो निर्विवेको विधाता ॥ ८९ ॥

इति चाणक्य-राजनीतिशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

— —

## सप्तमोऽध्यायः

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
अवस्थातः प्रजायन्ते मित्राणि रिपवस्तथा ॥ १ ॥

शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २ ॥

न मातापितृदारेषु सोदरेषु न बन्धुषु ।
विस्रम्भस्तादृशः पुंसां यादृङ्मित्रे निरन्तरम् ॥ ३ ॥

मित्राणि तानि विषमेषु भवन्ति यानि
ते पण्डिता जगति ये पुरुषान्तरज्ञाः ।
त्यागी स यः कृशधनोपि हि संविभागी
कार्य्यं विना भवति यः स परोपकारः ॥ ४ ॥

त्यजेन्मालासमं मित्रं त्यजेन्मित्रं तुलासमम् ।
त्यजेन्मेरुसमं मित्रं ग्राह्यं मित्रं महीसमम् ॥ ५ ॥
सुहृदि निरन्तरचित्ते गुणिनि कलत्रे प्रभौ विशेषज्ञे ।
विश्राम्यतीव हृदयं दुःखस्य निवेदनं कृत्वा ॥ ६ ॥
यदीच्छेच्छाश्वतीं प्रीतिं त्रीन् दोषान् परिवर्ज्जयेत् ।
द्यूतमर्थप्रयोगञ्च तं विना दारदर्शनम् ॥ ७ ॥
शतात् स्याद्विकलो मित्रं सहस्रादपि केकरः ।
काणः शतसहस्राद्वा मन्दश्मश्रुर्न कस्यचित् ॥ ८ ॥
मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो वसेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ९ ॥
अतिचण्डानिलोद्धूततरङ्गस्य महोदधेः ।
शक्यते प्रसभं रोधो नानुरक्तस्य चेतसः ॥ १० ॥
नवनीतोपमा वाणी करुणा कोमलं मनः ।
एकबीजप्रजातानां भवत्यवनतं शिरः ॥ ११ ॥
अग्निरापः स्त्रियो मूर्खः सेना राजकुलं तथा ।
संयोगसेवनाभ्याञ्च सद्यः प्राणहराणि षट् ॥ १२ ॥

न जारजातस्य ललाटशृङ्गं
न सत्कुलीनस्य करेऽस्ति पद्मम् ।
यदा यदा मुञ्चति दुष्टवाक्यं
तदा तदा पश्यति जारजातम् ॥ १३ ॥

अत्यासन्ना विनाशाय दूरस्था न फलप्रदाः ।
सेव्या मध्यमभावेन राजा वह्निर्गुरुः स्त्रियः ॥ १४ ॥
पराधीना निद्रा परपुरुषचित्तानुसरणं
मुदा शून्यं हास्यं रुदितमपि शोकेन रहितम् ।

पणे न्यस्तः कायः करजदशनैर्भिन्नवपुषाम्
अहो कष्टा वृत्तिर्जगति गणिकानां बहुभया ॥ १५ ॥
किञ्चित्रं यदि शब्दशास्त्रकुशलो विप्रो भवेत् पण्डितः
किञ्चित्रं यदि दण्डनीतिनिपुणो राजा भवेद् धार्म्मिकः ।
तच्चित्रं यदि रूपयौवनवतो साध्वी भवेदङ्गना
तच्चित्रं यदि निर्द्धनोऽपि पुरुषः पापं न कुर्य्यात् क्वचित् ॥ १६ ॥
नात्मच्छिद्रं परे दद्यात् परच्छिद्राणि लक्षयेत् ।
गूहेत् कूर्म्म इवाङ्गानि परभावं परीक्षयेत् ॥ १७ ॥
पातालतलवासी च वारिप्राकारनिष्कृतः ।
यदि न स्वाङ्गरोत्थो विषः केनोपलभ्यते ॥ १८ ॥
शङ्कनीयो हि सौमित्रे ! विश्वस्तोऽपि विभीषणः ।
यस्य न स्वजनप्रीतिः कुतस्तस्य परे जने ॥ १९ ॥
न तथा बाधते शत्रुः कृतवैरोऽपि राघव !
यथा भिनत्ति मर्म्माणि तीक्ष्णः स्वजनकण्टकः ॥ २० ॥
न तावदन्यजातीयश्छिनत्ति परशुस्तरुम् ।
न यावत्तरुजातीयं वृन्तं तत्र निबध्यते ॥ २१ ॥
कोकिलानां स्वरो रूपं लज्जा रूपं कुलस्त्रियः ।
विद्यायाः पटुता रूपं रूपं मूर्खस्य मौनता ॥ २२ ॥
कोकिलस्य स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ २३ ॥
न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् ।
कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ २४ ॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ २५ ॥

पठनाश्च तपस्वी च शूरश्चाप्यक्षतव्रणः ।
मध्यमा स्त्री सती चेति राजन् न श्रद्दधाम्यहम् ॥ २६ ॥

शाठ्येन मित्रं कपटेन धर्म्मं
परोपतापेन समृद्धिभारम् ।
सुखेन विद्यां पुरुषेण नारीं
वाञ्छन्ति ये नूनमपण्डितास्ते ॥ २७ ॥

क्षुदुत्पतनजृम्भासु श्वानादायुः प्रकुप्यते ।
अतस्तत्रात्मये कुर्य्याज्जीवोत्तिष्ठाङ्गलिध्वनीन् ॥ २८ ॥

न विश्वसेत्पूर्व्वपराजितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्य उलूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ २९ ॥

वृद्धां स्त्रियं नवं मद्यं शुष्कमांसार्द्रमूलकम् ।
रात्रौ वारि दिवा स्वप्नं विषवत् परिवर्ज्जयेत् ॥ ३० ॥

विषं वेश्म दरिद्रस्य वृद्धस्य तरुणी विषम् ।
अग्निचिता विषं विद्याऽप्यजीर्णे भोजनं विषम् ॥ ३१ ॥

प्रियं गीतमकण्ठस्य वृद्धस्य तरुणी प्रिया ।
प्रियं दानं दरिद्रस्य नीचस्योच्चासनं प्रियम् ॥ ३२ ॥

बालातपः पर्वणि मैथुनञ्च
श्मशानधूमो मठभोजनञ्च ।
रजस्वलावक्त्रनिरीक्षणञ्च
सुदीर्घमप्यायुरभिद्रवन्ति ॥ ३३ ॥

शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ३४ ॥

सद्यः पक्वं घृतं द्राक्षा बाला स्त्री क्षीरभोजनम् ।
उष्णोदकं तरुच्छाया सद्यः प्राणकराणि षट् ॥ ३५ ॥
सद्यो बलकराण्याहुः स्नानं चोराशनं पयः ।
सद्यो बलहराण्याहुराध्मानं मैथुनं जरा ॥ ३६ ॥
भूगृहं वरनारी च कार्पासं नागजं जलम् ।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥ ३७ ॥
शुष्कं मांसं पयो मीनं भार्य्यामितसुतैः सह ।
न भक्षयेत् प्रियैर्जातु वियोगं कुरुते क्षणात् ॥ ३८ ॥

कुचेलिनं दन्तमलोपधारिणं
मह्वाशनं निष्ठुरवाक्यभाषणम् ।
सूर्य्योदये चास्तमये च शायिनं
जहाति लक्ष्मीरपि चक्रधारिणम् ॥ ३९ ॥

चत्वारि घोररूपाणि सन्ध्याकाले परित्यजेत् ।
आहारं मैथुनं निद्रां स्वाध्यायञ्च विवर्जयेत् ॥ ४० ॥
आहाराज्जायते व्याधिर्मूढ़गर्भश्च मैथुनात् ।
अलक्ष्मीः शयनाच्चैव स्वाध्यायादायुषः क्षयः ॥ ४१ ॥
सन्ध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः ।
चत्वारि तस्य नश्यन्ति ह्यायुर्विद्या यशो बलम् ॥ ४२ ॥
मिथ्याच्छेदस्तृणाणां क्षितिनखलिखनं पादयोरल्पपूजा
दन्तानामल्पशौचं वसनमलिनता रूक्षता मूर्द्धजानाम् ।
सन्ध्यायां वह्निसेवा शिरसि विकर्षणं संहताभ्यां कराभ्यां
स्वाङ्के पीठे च वाद्यं हरति धनपतेः केशवस्यापि लक्ष्मीम् ॥४३॥
स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं
शौचस्यायतनं मलापहरणं संवर्द्धनं तेजसः ।

रूपोद्योतकरं रिपुप्रमथनं कामाग्निसन्दीपनं
नारीणाञ्च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥ ४४ ॥
ताम्बूलं कटुतिक्तमिश्रमधुरं चारं कषायान्वितं
पित्तघ्नं कफनाशनं क्रमिहरं दुर्गन्धिनिर्णाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे ! त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभम् ॥ ४५ ॥

कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धिताञ्च ।
ओजः करोति कफजांश्च निहन्ति रोगान्
ताम्बूलमेव स्वपरांश्च गुणान् करोति ॥ ४६ ॥
शिरः सुधौतं चरणौ सुनिर्म्मलौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्व्वमैथुनं
चिरप्रणष्टां श्रियमानयन्ति षट् ॥ ४७ ॥

येन केन हि पुष्पेण पाण्डुरेण विशेषतः ।
शिरसा धार्य्यमाणेन ह्यलक्ष्मीः प्रतिहन्यते ॥ ४८ ॥
दीपस्य पश्चिमच्छाया छाया शय्यासनस्य च ।
रजकस्य च यत् चेत्रमलक्ष्मीस्तत्र तिष्ठति ॥ ४९ ॥
गजाश्वरथधान्यानां गवामपि रजः शुभम् ।
अशुभन्तु विजानीयात् खरोष्ट्रमहिषीरजः ॥ ५० ॥
गवां रजो धान्यरजः पुत्रस्याङ्गगतं रजः ।
रजांस्येतानि पुण्यानि पापमेभिः प्रणश्यति ॥ ५१ ॥
अजाविगर्द्दभोष्ट्राणां मार्जारमूषिकस्य च ।
रजांस्येतानि पापानि सर्वतः परिवर्जयेत् ॥ ५२ ॥

शूर्पवात-नखाग्राम्बु-स्नानवस्त्रच्युतोदकम्।
शिवनिर्माल्य-केशाम्बु पुण्यं हन्ति पुराकृतम् ॥ ५३ ॥
वैरिणा सह सन्धाय विश्वस्तो यः स्वपेत् स्वयम्।
स वृक्षाग्रे कृतस्वप्नः पतितः प्रतिबुध्यते ॥ ५४ ॥

य एव राजन्! मृदुमन्दभाषो
स एव दूरात् परिवर्ज्जनीयः।
अभ्रादिमुक्तस्य दिवाकरस्य
मरीचयस्तीक्ष्णतरा भवन्ति ॥ ५५ ॥

मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम्।
नासाध्यं मृदुना किञ्चित् तस्मात् तीक्ष्णात् परो मृदुः ॥ ५६ ॥
क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा।
क्षमावशीकृतो लोकः क्षमया किं न साध्यते? ॥ ५७ ॥
नात्यन्तसरलैर्भाव्यं गत्वा पश्य वने तरून्।
छिद्यन्ते सरलास्तत्र कुब्जाः सन्ति पदे पदे ॥ ५८ ॥
क्षुरस्नानप्रयाणेषु नववस्त्रादिसङ्गमे।
नक्षत्रग्रहमाङ्गल्यमुपेक्षेत विचक्षणः ॥ ५९ ॥

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६० ॥

गजतुरगशतैः प्रयान्तु मूर्खाः
धनहीना विबुधाः प्रयान्तु पद्भ्याम्।
गिरिशिखरगतापि काकपंक्तिः
पुलिनगतैर्न समेति राजहंसैः ॥ ६१ ॥

यद्वित्ताढ्या प्रखलपुरुषाः साधवो वित्तहीनाः
नास्मिन्नर्थे वचनपटुभिर्निन्दनीया खलु श्रीः।
वित्तभ्रष्टो गणयति समान् कस्तृणेनापि मूर्खान्
विद्वांसस्तु प्रकृतिसुभगाः कस्य नाभ्यर्हणीयाः ? ॥ ६२ ॥
नित्यं प्रमुदिता मूर्खा ज्ञानविज्ञानवर्जिताः ।
पण्डिता नित्यशोकार्त्ता ज्ञानाङ्कुशवशीकृताः ॥ ६३ ॥
अपात्रे रमते नारी गिरौ वर्षति वासवः ।
खलमाश्रयते लक्ष्मीः प्राज्ञः प्रायेण निर्द्धनः ॥ ६४ ॥
लक्ष्मीर्लक्षणहीनेऽस्ति जातिहीने सरस्वती ।
अपात्रे रमते नारी गिरौ वर्षति वासवः ॥ ६५ ॥
विधेः कन्यायुग्मं सुगतिरपरा दुर्गतिरभूत्
तयोराद्यं मोहात् कुलगुणविहीनाय स ददौ ।
ततः पश्चात्तापादिव तदनुजां दातुमधुना
कुलीनं विद्वांसं वरमिह वरेण्यं वरयति ॥ ६६ ॥
षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णोऽपि धार्य्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ॥ ६७ ॥
तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्म्मिकः ? ॥६८॥
एकेनापि सुपुत्रेण विद्यायुक्तेन साधुना ।
कुलमुद्भासते सर्व्वं चन्द्रेण गगनं यथा ॥ ६९ ॥
मूषिको गृहजातोऽपि हन्तव्योऽनुपकारकः ।
हृतप्रदानैर्मार्जारो हितकृत् प्रार्थ्यतेऽन्यतः ॥ ७० ॥
वीणा वंशश्चन्दनं चन्द्रभासः
चन्द्राभासा यौवनस्था रमण्यः ।

नैतद्रम्यं क्षुत्पिपासातुराणां
सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ ७१ ॥

अणुः पूर्व्वं बृहत्पश्चान्नवत्यार्य्येण सङ्गतिः ।
विपरीतमनार्य्येण यथेच्छसि तथा कुरु ॥ ७२ ॥

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वनमाभासते सर्वं सुपुत्रेण कुलं यथा ॥ ७३ ॥

वरमेको गुणी पुत्रो निर्गुणेन शतेन किम् ?
एकश्चन्द्रस्तमो हन्ति न च तारासहस्रशः ॥ ७४ ॥

केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत् स्वरूपविपर्य्यस्ताद्विश्वासो ह्यापदां पदम् ॥ ७५ ॥

द्विषन्तौ पितरौ मन्ये पुत्रो याभ्यां न पाठितः ।
न शोभते सभामध्ये हंसमध्ये वको यथा ॥ ७६ ॥

लालयेत् पञ्च वर्षाणि दश वर्षाणि ताड़येत् ।
षोड़शे वत्सरे प्राप्ते पुत्रे मित्रवदाचरेत् ॥ ७७ ॥

जायमानो हरेद्दारान् वर्द्धमानो हरेच्छ्रियम् ।
म्रियमाणो हरेत्प्राणान् नास्ति पुत्रसमो रिपुः ॥ ७८ ॥

पुत्रः स्यादिति दुःखिनः सति सुते तस्यामयैर्दुःखिन
स्तद्दस्ताशनचिन्तयाऽप्यसुखिनस्तन्मौर्ख्यतो दुःखिनः ।
जीवेदित्यपि दुःखिनो यदि मृतः प्राणान्तकं दुःखिनः
पुत्रव्याजमुपागतो रिपुरसौ मा जायतां कस्यचित् ॥ ७९ ॥

यस्य पुत्रा न विद्वांसो न शूरा न च धार्म्मिकाः ।
सान्धकारं कुलं तस्य नष्टचन्द्रेव शर्व्वरी ॥ ८० ॥

निशायां दीपकश्चन्द्रः प्रभाते दीपको रविः ।
पृथिव्यां दीपको राजा सुपुत्रः कुलदीपकः ॥ ८१ ॥

एतदेवायुषः सारं निसर्गक्षणभङ्गिनः ।
स्निग्धैर्मुग्धैर्विदग्धैश्च यदर्यान्वितमास्यते ॥ ८२ ॥
विभृयादनुजान् सर्वान् ज्येष्ठभ्राता यथा पिता ।
पुत्रवदनुवर्त्तेरन् कनिष्ठा अग्रजन्मनः ॥ ८३ ॥
सङ्घातः श्रेयसो मूलं स्वजनस्य विशेषतः ।
तुषमात्रे पृथग्भिन्ने तण्डुलं न प्ररोहति ॥ ८४ ॥
बहूनामप्यसाराणां समवायो हि दुःसहः ।
तृणैराविष्कृता रज्जुस्तया हस्त्यपि बध्यते ॥ ८५ ॥
अपहृत्य परस्यार्थं तेन धर्मं करोति यः ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥ ८६ ॥
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
तद्धनं कुलनाशाय भवेदात्मवधाय च ॥ ८७ ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकान् ॥ ८८ ॥
ब्रह्मघ्ने च सुरापे च स्तेने च गुरुतल्पगे ।
निष्कृतिर्विद्यते राजन् कृतघ्ने नास्ति निष्कृतिः ॥ ८९ ॥
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णां वयमित्येषां निष्कृतिं नैव शुश्रुम ॥ ९० ॥
यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् ।
अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ९१ ॥
ब्रह्महा वृत्तिहा चैव द्वावेतौ तुलया धृतौ ।
ब्रह्महा मुच्यते कल्पैर्वृत्तिहा न तु मुच्यते ॥ ९२ ॥
नाश्नन्ति पितरः पिण्डं नाश्नन्ति वृषलीपतेः ।
स्त्रीजितस्य च नाश्नन्ति यस्योपपतिर्गृहे ॥ ९३ ॥

मरणायेव जायन्ते म्रियन्ते जन्मने पुनः।
न परात्मोपकाराय तृणानीवेतरे जनाः॥ ८४ ॥
तण्डुलाः स्वर्णवद् यत्र व्रीहयो यत्र रत्नवत्।
पक्वान्नं भस्मवच्चात्र तत्र शक्र ! वसाम्यहम्॥ ८५ ॥
वाजिनो यत्र तत्राहं यत्राहं तत्र वाजिनः।
न ते यत्र न तत्राहं नाहं यत्र न तत्र ते॥ ८६ ॥

चित्तायत्तं धातुबद्धं शरीरं
चित्ते नष्टे धातवो यान्ति नाशम्।
तस्माच्चित्तं सर्व्वतो रक्षणीयं
सुस्थे चित्ते बुद्धयः सम्भवन्ति॥ ८७ ॥
आहारार्थं कर्म्म कुर्य्यादनिन्द्यं
कुर्य्यात्तच्च प्राणसन्धारणार्थम्।
प्राणा धार्य्या तत्त्वविज्ञानहेतो
स्तत्त्वं ज्ञेयं येन भूयो न जन्म॥ ८८ ॥

इति चाणक्य-राजनीतिशास्त्रे सप्तमोऽध्यायः॥ ७ ॥

---

## अष्टमोऽध्यायः

धर्म्मः प्रव्रजितस्तपः प्रचलितं सत्यञ्च दूरङ्गतं
पृथ्वी मन्दफला जनाः कपटिनो रौद्रे स्थिता ब्राह्मणाः।
राजा दण्डकरो विचाररहितः पुत्राः पितुर्द्वेषिणो
भार्य्या भर्त्तृविरोधिनी कलियुगे धन्या नरा ये मृताः॥ १ ॥

देशस्तस्करदूषितो गतघृणो राजा दया दुर्जने-
ष्वायासः स्वजनेषु दुर्नयरतो लोको भयश्चाध्वनि ।
मित्रं छिद्ररतं गुणेष्वगुणता क्रूरे धनं बान्धवाः
निःस्नेहा बत वञ्चनापि तनये स्वास्थ्यं शरीरे कुतः ? ॥ २ ॥
बुद्धिः पौरुषमार्जवं गुणरतिर्विद्या कुलं सेवनं
कालेऽस्मिन् विफलत्वमेव सकलं ह्येतत् पुरः स्वामिनाम् ।
यो दोषः कुरुते परस्य मुखरं धीरस्य यो रोधको
यः पापद्रविणस्य वर्द्धनकरस्तेषां भवेत् सः प्रियः ॥ ३ ॥
अतिक्रान्तः कालः सुचरितशतामोदसुभगो
गताः शुक्ला धर्म्मा नवनलिनसूत्रांशुतनुताम् ।
परिम्लानः प्रायो बुधजनकथासारनिपुणो
निरानन्दं जातं जगदिदमतीतोत्सवमिव ॥ ४ ॥
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परचित्तरतां नारीं पुत्रञ्च व्यसने स्थितम् ॥ ५ ॥
परान्नं परवस्त्रञ्च परशय्यां परस्त्रियम् ।
परवादं परद्रव्यं दूरतः परिवर्जयेत् ॥ ६ ॥
खण्डं खण्डञ्च पाण्डित्यं क्रयक्रीतञ्च मैथुनम् ।
भोजनञ्च परायत्तं तिस्रः पुंसां विडम्बनाः ॥ ७ ॥
आसनाच्छयनाच्चैव संजल्पात् सहभोजनात् ।
पुंसां संक्रमते पापं घटाद्घटमिवोदकम् ॥ ८ ॥
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असम्भोगश्च नारीणां वस्त्राणामातपो जरा ॥ ९ ॥
दुर्ज्जनाः कलिमिच्छन्ति सन्धिमिच्छन्ति साधवः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १० ॥

मानो हि मूलमर्थस्य माने म्लाने धनेन किम् ।
प्रभ्रष्टो मानहीनस्य जीवनान्मरणं वरम् ॥ ११ ॥
अतिदानाद्बलिर्बद्धो ह्यतिमानात् सुयोधनः ।
अति कामाद्दशग्रीवो ह्यति सर्वत्र गर्हितः ॥ १२ ॥
नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १३ ॥

वणिक् प्रमादी भृतकश्च मानी
भिक्षुर्विलासी विधनश्च कामी ।
वेश्याङ्गना चाप्रियवादिनी च
प्रजापतेर्दुश्चरितानि पञ्च ॥ १४ ॥
दाता दरिद्रः सधनश्च लोभी
सेव्यः कदर्थ्यस्तनयोऽविधेयः ।
परोपकाराभिरतस्य मृत्युः
प्रजापतेर्दुश्चरितानि पञ्च ॥ १५ ॥
कान्तावियोगः स्वजनापमानः
कन्या विशीला स्वजनस्य सेवा ।
दरिद्रभावात् प्रविमुक्तमित्रं
विनाग्निना पञ्च दहन्ति तीव्रम् ॥ १६ ॥
वश्याः सुता वित्तकरी च विद्या
धर्म्या कथा सज्जनसङ्गतिश्च ।
दुष्टा च भार्या वशवर्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥ १७ ॥
कुरङ्गमातङ्गपतङ्गभृङ्ग-
मीना हताः पञ्चभिरेव पञ्च ।

एकः प्रमादी स कथं न वध्यो
यः सेवते पञ्चभिरेव पञ्च ॥ १८ ॥

विमाननं दुश्चरितानुकीर्त्तनं कथाभिघातो वचनेषु विस्मयः ।
अदृष्टदानं कृतपूर्व्वनाशनं विरक्तभावस्य नरस्य लक्षणम् ॥ १९ ॥

स्निग्धं पश्यति सुस्मितं कथयति स्नेहात् करेण स्पृशन्
भोक्तुं नेच्छसि पार्श्वतो विवृणुते कर्त्तव्यमन्तर्गतम् ।
दोषान् संवृणुते गुणान् कथयते नो याचिते खिद्यते
शंसामिव परोक्षमाचरति यत् स्नेहस्य तल्लक्षणम् ॥ २० ॥

अधीरः कर्कशस्तब्धः कुचेलः स्वयमागतः ।
एते पञ्च न पूज्यन्ते बृहस्पतिसमा अपि ॥ २१ ॥

पर्वतारोहणे तोये गोकुले श्वानविग्रहे ।
पतितस्य समुत्थाने यष्टेः पञ्च गुणाः स्मृताः ॥ २२ ॥

अभ्रच्छाया खलप्रीतिर्वेश्यारागो विभूतयः ।
महीभुजां प्रसादश्च पञ्चैते चञ्चलाः स्मृताः ॥ २३ ॥

अजायुद्धं द्विजश्राद्धं प्रभाते मेघडम्बरम् ।
दम्पत्योः कलहश्चैव क्षणमेकं भविष्यति ॥ २४ ॥

अस्थिरं जीवितं लोके यौवनं धनमस्थिरम् ।
अस्थिरं पुत्रदारादि धर्म्मः कीर्त्तिर्यशः स्थिरम् ॥ २५ ॥

दानमर्थोद्धृतं वाक्यात् कीर्त्तिधर्म्मौ च चेतसः ।
देहात् परोपकारश्च संसारात् सारमुद्धरेत् ॥ २६ ॥

भूतजीवितमल्पत्वं रात्रिस्तत्सार्द्धहारिणी ।
व्याधिशोकजरायासैरर्द्धन्तदपि निष्फलम् ॥ २७ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं हृतं
तस्यार्द्धस्य च किञ्चिदेव जरया बाल्येन किञ्चिद् हृतम् ।

किञ्चिद्व्याधिवियोगदुःखमरणैर्भूपालसेवादिभि-
र्नष्टं शिष्टमतस्तरङ्गतरलैः पुंसां सुखं क्व नृणे ? ॥ २८ ॥

अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिर्बहिष्कृतस्य ।
उदरभरणमात्रे केवलेच्छो-
र्मनुजपशोश्च पशोश्च को विशेषः ? ॥ २९ ॥

आहारनिद्राभयमैथुनञ्च
सामान्यमेतत् पशुभिर्नराणाम् ।
एको विवेकस्त्वधिको मनुष्ये
तेनैव हीनः पशुभिः समः स्यात् ॥ ३० ॥

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
यन्न भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥ ३१ ॥

नोपकाराय सुहृदां नापकाराय वैरिणाम् ।
जननीगर्भभाराय मूढानां जन्म केवलम् ॥ ३२ ॥

पूर्व्वं येन व्रतं सुतीर्थमरणं विप्रा न सन्तर्पिता
हव्यं नैव हुतं हुताशनमुखे नाराधितः शङ्करः ।
दत्तं नैव हिरण्यमन्नवसनं गावस्तिला मेदिनी
ते तिष्ठन्ति कुचेलभक्तविधिना नित्यं नरा दुःखिताः ॥ ३३ ॥

नोपात्तं द्रविणं कुलं न गणितं मित्रं न चोपार्जितं
शास्त्रं नाधिगतं तपो न चरितं न क्रीड़ितं वाजिभिः ।
कान्ताकामलपद्मवाधररसं पीतं न चन्द्रोदये
तारुण्यङ्गतमेव निष्फलतया शून्यालये दीपवत् ॥ ३४ ॥

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे परैर्जातैर्मृतैश्च किम् ॥ ३५ ॥

दाने तपसि शौर्य्ये वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ३६ ॥
यस्य त्रिवर्गशून्यानि दिनानि यान्ति देहिनः ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ३७ ॥

यज्जीवितं क्षणमपि प्रथितं मनुष्यै
विज्ञानविक्रमयशोऽभिरस्यमानम् ।
तन्नाम जीवितमिह प्रवदन्ति सन्तः
काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ॥ ३८ ॥

धनं धर्मश्च विद्या च रूपं शीलं कुलं तथा ।
सुखमायुर्यशश्चैव नव गोप्यानि यत्नतः ॥ ३९ ॥
असत्यस्य वणिग् मूलं शाखा तस्य पराङ्गना ।
कामस्तत्पत्रपुष्पाणि फलानि द्यूतकारकः ॥ ४० ॥
यथा यथा हि पुरुषः कल्याणे कुरुते मतिम् ।
तथा तथास्य सर्व्वार्थाः सिद्ध्यन्ति नात्र संशयः ॥ ४१ ॥
मङ्गलाच्छ्रीः प्रभवति प्रागल्भ्यात् प्रकटीभवेत् ।
तद्दृद्धा कुरुते मूलं संयमात् स्थैर्य्यमश्नुते ॥ ४२ ॥
तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् ।
आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत् ॥ ४३ ॥
आयत्तौ गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्य्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥ ४४ ॥
नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पबलोऽपि सन् ।
वह्निरल्पोऽपि संवृद्धो भस्मसात् कुरुते वनम् ॥ ४५ ॥
ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्द्धन्ते तस्मान्निःशेषमाचरेत् ॥ ४६ ॥

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षड़ेते आततायिनः ॥ ४७ ॥
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ ४८ ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चनः ।
क्षतं प्रतिक्षतं कुर्य्याद्धिंसितं प्रतिहिंसितम् ॥ ४९ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत् कुटिलं बन्धुं विषकुम्भं पयोमुखम् ॥ ५० ॥

तद्भोजनं यद् द्विजभुक्तशेषं
स बुद्धिमान् यो न करोति पापम् ।
स वै सुहृद् यो न वदेत् परोक्षं
दम्भं विना यत् कुरुते स धर्मः ॥ ५१ ॥
क्लिष्टं वृथा यत् तपसा न तीर्थे
दत्तं वृथा यत् क्षुधिते न पात्रे ।
भुक्तं वृथा नो रुचिरं न पथ्यं
मृत्युर्वृथा यन्न रणे न तीर्थे ॥ ५२ ॥

पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम् ।
स्वामिनं सर्व्वभावेन परलोकममायया ॥ ५३ ॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्म्मम् ।
धर्म्मो मनो यत्र न सत्यमस्ति
सत्यं न तद् यच्छलदोषयुक्तम् ॥ ५४ ॥
तन्मङ्गलं यत्र मनः प्रसन्नं
तज्जीवनं यत्र परोपकारः ।

तदर्जितं यद्द्विजभुक्तशेषं
तन्नर्जितं यत्समरे नियुक्तम् ॥ ५५ ॥

तज्ज्ञानं यदगर्व्वितं स पुरुषो यः खिद्यते नेन्द्रियै
स्तद्दानं यदकत्थनं स विभवो यः साधुसाधारणः।
साधोर्या न मदं करोति स सुखी यो नोह्यते तृष्णया
तन्मित्रं यदयन्त्रितं स उदयो लोकोपकाराय यत् ॥ ५६ ॥

यत्र नियन्त्रणसुखं यत्र विश्वासभाजनम्।
यत्र निर्व्याजसत्स्नेहं रिपुत्वं तत्र सौहृदम् ॥ ५७ ॥

आचारो ग्रामवासान्तो गृहान्ता प्रभुता स्त्रियः।
नृपश्रीर्ब्रह्मशापान्ता फलान्तं ब्रह्मवर्चसम् ॥ ५८ ॥

सर्वे क्षयान्ता उदयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम् ॥ ५९ ॥

यज्ञो नश्यत्यसत्येन तपः क्रोधेन नश्यति।
आयुर्विप्रावमानेन दानञ्च परिकीर्त्तनात् ॥ ६० ॥

गतश्रीर्गणकान् द्वेष्टि गतायुश्च चिकित्सकान्।
गतायुश्च गतश्रीश्च ब्राह्मणान् द्वेष्टि भारत ! ॥ ६१ ॥

यदीच्छेत् पुनरागन्तुं नातिदूरमनुव्रजेत्।
उदकान्तान्निवर्त्तेत स्निग्धच्छायाश्च पादपात् ॥ ६२ ॥

अनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीनायका विनश्यन्ति नश्यन्ति शिशुनायकाः ॥ ६३ ॥

अर्थातुराणां न सुहृन्न बन्धुः
कामातुराणां न भयं न लज्जा।
विद्यातुराणां न सुखं न निद्रा
क्षुधातुराणां न वपुर्न तेजः ॥ ६४ ॥

कुतो निद्रा दरिद्रस्य परप्रेष्यवरस्य च।
परनारीप्रसक्तस्य परद्रव्यहरस्य च॥ ६५॥

सुखं स्वपिति निश्चिन्तः प्रसारितपदद्वयः।
मानभङ्गकरी कन्या कुले यस्य न जायते॥ ६६॥

स्थिरः सुहृद् भृत्यचयोऽनुकूलः
स्वामी गुणज्ञः सुखितश्च देशः।
पत्नी सती यस्य कुले न कन्या
प्रसार्य्य पादौ स सुखेन शेते॥ ६७॥

स्थानभ्रष्टा न पूज्यन्ते दन्ताः केशा नखा नराः।
स्थानस्थिताश्च शोभन्ते पवित्रत्वं भजन्ति ते॥ ६८॥

कण्टकस्य विमार्गस्य दन्तस्य गणितस्य च।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम्॥ ६९॥

शीतलं चन्दनं लोके चन्दनादपि चन्द्रमाः।
चन्द्रचन्दनयोर्मध्ये शीतलः साधुसङ्गमः॥ ७०॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम्।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितिस्तनुभृतां तनुभिस्ततः किम्?॥ ७१॥

सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।
उपानद्गूढपादस्य ननु चर्म्मावृतेव भूः॥ ७२॥

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषाः त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥ ७३॥

नाच्छादयति कौपीनं न दंशमशकापहम्।
शुनः पुच्छमिवानर्थं पाण्डित्यं धर्म्मवर्जितम्॥ ७४॥

आचारः कुलमाख्याति देशमाख्याति भाषितम् ।
सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ ७५ ॥

वृथा वृष्टिः समुद्रस्य वृथा तृप्तस्य भोजनम् ।
वृथा दानमपात्रेषु नीचस्योपकृतिर्वृथा ॥ ७६ ॥

दूरस्थोऽपि समीपस्थो यो वै मनसि वर्त्तते ।
हृदये यो न वर्त्तेत समीपस्थोऽपि दूरतः ॥ ७७ ॥

गिरौ कलापी गगने पयोदो
लक्षान्तरे भानुर्जले च पद्मम् ।
इन्दुर्द्विलक्षे कुमुदस्य बन्धु-
र्यो यस्य हृद्यो नहि तस्य दूरम् ॥ ७८ ॥

न च भवति वियोगो दुःखविच्छेदहेतो
र्जगति गुणनिधीनां सज्जनानां कदाचित् ।
घनपटलनिरुद्धो दूरसंस्थोपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ ७९ ॥

सर्व्वेषामेव रत्नानां स्त्रीरत्नं रत्नमुत्तमम् ।
तदर्थं रत्ननिचयं तस्मिन् त्यक्ते धनेन किम् ? ॥ ८० ॥

जयो धरित्र्याः परमेव सारं
परं गृहं सद्मनि देवदेशः ।
तत्रापि शय्या शयने वरा स्त्री
रत्नोज्ज्वला राजसुखस्य सारम् ॥ ८१ ॥

आकारं विनिगूहतां रिपुबलं जेतुं समुत्तिष्ठतां
तन्त्रं चिन्तयतां कृताकृतशतव्यापारशाखाकुलम् ।
मन्त्रिप्रोक्तनिषेधिनां क्षितिभुजामाशङ्कतां सर्व्वतो
दुःखाम्भोनिधिवर्त्तिनां सुखलवं कान्तासमालिङ्गनम् ॥ ८२ ॥

श्रुतं दृष्टं स्पृष्टं स्मृतमपि हृदाह्लादजनकं
न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना ।
तदर्थं धर्म्मार्थौ सुतविषयसौख्यानि च ततः
गृहे लक्ष्म्यो मान्याः सततमबलाः सन्ति विभवैः ॥ ८३ ॥
धिक् तस्य मूढ़मनसः कुकवेः कवित्वं
यः स्त्रीमुखञ्च शशिनञ्च समीकरोति ।
भ्रूभङ्गविभ्रमकटाक्षनिरीक्षणानि
क्षेपप्रसादहसितानि कुतः शशाङ्के ॥ ८४ ॥
असारे खलु संसारे सारं सारङ्गलोचना ।
तदर्थं धनमिच्छन्ति तत् त्यागेन धनेन किम् ? ॥ ८५ ॥
नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम् ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजिता ह्यबलाः कथं ताः ॥ ८६ ॥
शीतांशौ यदि सौरभं यदि भवेदिन्दीवरे रक्तिमा
माधुर्यं यदि विद्रुमे तरलता कन्दर्पचापे यदि ।
रम्भायां यदि विप्रतीपवलनं लब्धोपमानं तदा
तद्वक्त्रं तदिहेक्षणं तदधरस्तद्भ्रूस्तदूरुद्वयम् ॥ ८७ ॥
अबलेति परीवादो वृथा हि हरिणीदृशाम् ।
यासां नेत्रनिपातेन नटवद् घूर्ण्यते जगत् ॥ ८८ ॥
लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः ।
एषापि स्वयमेव तुल्यरमणाभावाद् वराकी हता
कोऽयं चेतसि वेधसा विनिहतस्तन्व्यास्तनुं तन्वता ॥ ८९ ॥

नामृतं न विषं किञ्चिदेकैव तु नितम्बिनी ।
सैवामृतानुरक्ता स्त्री विरक्ता विषवल्लरी ॥ ९० ॥
गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव पदानि तिष्ठतु भवान् पश्यामि यावन्मुखम् ।
संसारे घटिकाप्रवाहविगलद्धारासमे जीविते
को जानाति पुनस्त्वया सह मम स्याद्वा न वा सङ्गमः ॥ ९१ ॥
अस्माकं बदरी वक्रे युष्माकं बदरी गृहे ।
बादरायणसम्बन्धाद् यूयं यूयं वयं वयम् ॥ ९२ ॥
एक एव परो मानी वने वसति चातकः ।
पिपासितो म्रियते वा याचते वा पुरन्दरम् ॥ ९३ ॥
अवश्यायकणैः प्राणान् सन्धारयति भिक्षिरः ।
याच्ञाभङ्गभयाद्भीतो न देवमपि याचते ॥ ९४ ॥
वन्ध्याष्टमे स्त्री त्याज्या तु नवमे तु मृतप्रजा ।
एकादशे स्त्री जननी सद्यस्त्वप्रियवादिनी ॥ ९५ ॥
अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च ।
मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु ॥ ९६ ॥
स्त्रीत्वं चौरत्वमेकान्तः पुंसो लाभोऽनियन्त्रणा ।
यत्र पश्चान्मयस्तत्र वातपूलं तृणस्य च ॥ ९७ ॥
अश्वं श्रान्तं गजं मत्तं वृषभं काममोहितम् ।
शूद्रमक्षरसंयुक्तं दूरतः परिवर्ज्जयेत् ॥ ९८ ॥
प्रत्यक्षे गुरवस्तुत्याः परोक्षे मित्रबान्धवाः ।
भृत्याः कर्म्मणि संप्राप्ते पुत्रा नैवामृतप्रदाः ॥ ९९ ॥
विदग्धवनितापाङ्गदर्शनादेव यत् सुखम् ।
न तत्प्राकृतनारीणां गाढालिङ्गनचुम्बनैः ॥ १०० ॥

समस्तैर्नायकगुणैर्भूषितः सखि मे पतिः ।
स एव यदि जारः स्यात् सफलं जीवितं भवेत् ॥ १०१ ॥
आकारेण शशी गिरा परभृतः पारावतश्चुम्बने
हंसश्चंक्रमणे गुणे सुरगुरू रत्यां प्रमत्तो गजः ।
इत्थं भर्त्तरि मे समस्तयुवतिश्लाघ्यैर्गुणैः सेविते
सुखं नास्ति विवाहितः पतिरसौ स्यान्नैकदोषो यदि ॥ १०२ ॥

जातेति चिन्तां महतीं प्रसूते
देयाऽत्र नो वेति विचारदुःखम् ।
दत्ता सुखं तिष्ठति वा न वेति
कन्यापितृत्वं ह्यतिकष्टमेव ॥ १०३ ॥

जवो यौवनमश्वानां फलं वृक्षस्य यौवनम् ।
स्त्रियाः स्तनौ यौवनं स्याद्धनं पुंसां हि यौवनम् ॥ १०४ ॥

किं कोकिलस्य रणितेन गते वसन्ते
किं कातरस्य बहुशास्त्रसुशिक्षितेन ।
किं गर्जितेन सुभटस्य पराङ्मुखस्य
किं जीवितेन रिपुणाङ्गुलिदर्शितेन । १५ ॥

कण्ठगद्गदता खेदो मुखे वैवर्ण्यवेपथू ।
म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ॥ १०६ ॥
कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ १०७ ॥
तावत्तपस्वी तेजस्वी शूरः प्राज्ञः कुलोन्नतः ।
पुमानित्युच्यते तावद् यावदर्थी न कस्यचित् ॥ १०८ ॥
जगतां पतिरर्थित्वाद् विष्णुर्वामनतां गतः ।
कोऽन्योऽधिकतरस्तस्माद् योऽर्थी याति न लाघवम् ॥ १०९ ॥

लज्जावतः कुलीनस्य वित्तं याचितुमिच्छतः ।
कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ ११० ॥
भास्करोऽपि यदि ब्रूयाद्देहीति कृपणं वचः ।
दीप्तो रश्मिसहस्रेण सोऽपि शीतलतां व्रजेत् ॥ १११ ॥
सन्तोषैश्वर्य्यसुखिनां दूरे दुर्गतिभूमयः ।
भोगाशापाशबद्धानामपमानः पदे पदे ॥ ११२ ॥
सन्तः सन्तोषशृङ्गस्थास्तृष्णाकल्लोलिनीजले ।
उन्मग्नाश्च निमग्नाश्च पश्यन्ति जनसन्ततिम् ॥ ११३ ॥
कुलं शीलञ्च सत्यञ्च प्रज्ञा तेजो धृतिर्बलम् ।
गौरवं प्रत्ययः स्नेहो दारिद्र्येण विनश्यति ॥ ११४ ॥

कुटुम्बचिन्ताकुलितस्य पुंसः
कुलञ्च शीलञ्च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवापः
प्रयान्ति तेनैव समं विनाशम् ॥ ११५ ॥

उत्तिष्ठ क्षणमेकमुद्वह सखे ! दारिद्र्यभारं गुरुं
श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन विदुषा सुप्तः श्मशाने शवो
दारिद्र्यान्मरणं वरं सुखमिति ज्ञात्वा स तूष्णीं स्थितः ॥ ११६ ॥
माता चैका पिता चैको मम तस्य च पक्षिणः ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥ ११७ ॥

गवाशिवाक्यानि स वक्ति नित्य-
महं मुनीनां वचनानि वच्मि ।
प्रत्यक्षमेतद् भवतैव दृष्टं
संसर्गजा दोषगुणा भवन्ति ॥ ११८ ॥

खड्गस्य गुणहीनस्य तेन्नांऽग्र सुपुरुषं वपुः।
युक्तं न तु गुणाढ्यस्य धनुषः प्राणिहिंसनम् ॥ ११८ ॥
गुणवानेव नमते पुरुषः कार्मुकं यथा।
स एव स्तब्धतामेति निर्गुणः कार्मुवं यथा ॥ १२० ॥
स एव गुणवान् धन्यो ह्यधन्यः कालपर्य्यये।
स एव पुरुषो दाता पुनर्भवति याचकः ॥ १२१ ॥
यस्योपायसहस्रेण वधमिच्छामि राघव !
तस्यैव श्रेय इच्छामि कार्य्याणां चञ्चला गतिः ॥ १२२ ॥
गुणाः सर्व्वत्र पूज्यन्ते पितृवंशो निरर्थकः।
वासुदेवं नमस्यन्ति वसुदेवं न केचन ॥ १२३ ॥
भ्रष्टं जन्मभुवस्ततोऽम्बुधिपयःपूरेण दूरीकृतं
लग्नं तीरवने वनेचरशतैरात्तं ततः खण्डितम्।
विक्रीतं तुलितं ततः खरशिलाघृष्टं जनैश्चन्दनं
वन्द्यन्ते करटे विपत्स्वपि गुणैः को नाम नो पूज्यते ॥१२४॥
गुणाः खलु गुणा एव न गुणा धनहेतवः।
अर्थसञ्चयकर्त्तृणि भाग्यानि पृथगेव हि ॥ ११५ ॥
गुणाः खलु गुणा एव न गुणा धनहेतवः।
सगुणो निष्फलं चापः निर्गुणः सफलः शरः ॥ १२६ ॥

गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः।
सुस्वादुतोयप्रभवा हि नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ १२७ ॥
गुणैर्न किञ्चिद् विदुषां प्रयोजनं
खलोऽर्थभागी सुगुणश्च निर्धनः।

यथा हि काको लभते गृहाद्बलिं
तथा न हंसो न शुको न चातकः ॥ १२८ ॥

सन्तोऽपि न प्रकाशन्ते दरिद्रस्याखिला गुणाः ।
भास्वानिव पदार्थानां श्रीर्गुणानां प्रकाशिनी ॥ १२९ ॥

मणिः शाणोऽन्नीचैः समरविजयी हेतिनिहितः
मदक्षीणो नागः शरदि सरिदासानुपुलिना ।
कलाशेषश्चन्द्रः सुरतमृदिता बाललना
न निम्नाः शोभन्ते व्ययितविभवाश्चार्थिषु नराः ॥ १३० ॥

चन्द्रो भाति सुनिर्मलेऽथ गगने ताराविचित्रेऽम्बरे
हारो भाति च कामिनीकुचतटे पीनोन्नते यौवने ।
हंसो भाति सरोवरे स नलिने वैदूर्य्यवर्णोदके
राजा भाति सुमन्त्रिभिः परिवृतः श्रीधाम्नि सिंहासने ॥१३१॥

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्त्तिवच्छीतलं
पुत्रालिङ्गनवत्तथैव मधुरं तद्बालसम्भाषवत् ।
जीवस्यापि हि जीवितं द्रविणवद्दुःखापहं लुसवत्
सद्यः प्राणहरं हरिस्मरणवत् पानीयमानीयताम् ॥ १३२ ॥

व्यायामिकोऽस्मि चतुरोऽस्मि विचक्षणोऽस्मि
विद्याधरोऽस्मि पटुरस्मि न चास्मि भीरुः ।
कार्य्यं करोमि सततं न च सिद्धिरस्ति
दैवं न संवहति कोऽत्र ममापराधः ॥ १३३ ॥

जानामि धर्म्मं न च मे प्रवृत्ति-
र्जानाम्यधर्म्मं न च मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥१३४॥

साधयति यत् प्रयोजनमज्ञो-
ऽपि तदस्य काकतालीयम्।
अविदन्नपि किमप्यक्षर-
मुल्लिखति घूर्णोऽपि काष्ठेषु॥ १३५॥

कः कण्टकानां प्रकरोति तैक्ष्ण्यं
विचित्रभावं मृगपक्षिणाञ्च।
माधुर्य्यमिक्षौ कटुता च निम्बे
स्वभावतः सर्वमिदं हि सिद्धम्॥ १३६॥

अर्थस्य मूलं विकृतिर्नयश्च
धर्म्मस्य कारुण्यमकैतवञ्च।
कामस्य वित्तञ्च वपुर्वयश्च
मोक्षस्य सर्वार्थनिवृत्तिरेव॥ १३७॥

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम्।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्॥ १३८॥

कविरेव कवेर्वेत्ति कविकर्म्मणि कौशलम्।
शेषाहिरेव जानाति भुवो भारस्य निश्चयम्॥ १३९॥

देशे हि यत्र करभः कलभश्च तुल्यो
यत्रापि नास्ति हयरासभयोर्विचारः।
काचोपलस्य च मणेश्च न यत्र भेदः
को नाम तत्र गुणिनामधिवासरागः॥ १४०॥

गुणा यत्र न पूज्यन्ते गुणिनां तत्र का कथा?
नग्नक्षपणकग्रामे रजकः किं करिष्यति?॥ १४१॥

विचलति कल्पान्ते मर्य्यादां सागरस्त्यजेत्।
प्रतिपन्नसत्त्वाः सत्त्वा न चलन्ति कदाचन॥ १४२॥

हंसो न भाति बलिभोजनवृन्दमध्ये
गोमायुमण्डलगतो न विभाति सिंहः ।
जात्या न भाति तुरगः खरयूथमध्ये
विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ १४३ ॥

विन्ध्यः पुरा रविरथावधिवृद्धमूर्द्धा
निम्नत्वमाप वचनात् किल कुम्भयोनेः ।
नाद्यापि लङ्घयति सत्यमतिः प्रतिज्ञा-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १४४ ॥

अद्यापि नोज्झति हरः किल कालकूटं
शेषो विभर्त्ति धरणीं खलु मस्तकेषु ।
अम्भोनिधिर्वहति दुर्वहवाड़वाग्नि-
मङ्गीकृतं सुकृतिनः पलिपालयन्ति ॥ १४५ ॥

उत्पलस्य च पद्मस्य मत्स्यस्य कुसुमस्य ।
एकजातिप्रसूतानां रूपं गन्धः पृथक् पृथक् ॥ १४६ ॥

मृगा मृगैः सख्यमनुव्रजन्ति
गाभिश्च गावस्तुरगास्तुरङ्गैः ।
मूर्खैश्च मूर्खाः कवयः कवीन्द्रैः
समानशीलाश्च समानशीलैः ॥ १४७ ॥

अम्भोधिः स्थलतां स्थलं जलधितां धूलिलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
हेलादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः ॥ १४८ ॥

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।

कूमस्तत्पिशितेन सत्वरमसौ तेनैव यातो यथा
सुखस्तिष्ठति दैवमेव हि नृणां वृद्धौ क्षये चोद्यताम् ॥ १५९ ॥
खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
वाञ्छन् देशमनातपं द्रुततरं विल्वस्य मूलङ्गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं समस्तं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ १५० ॥
सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ १५१ ॥
पिता विवेकः सुमतिर्जनित्री
स्वसाप्यहिंसा दयिता दयेव ।
धर्म्मः सहायः करुणा कुमारी
सूनुस्तथा दीनजनोपकारः ॥ १५२ ॥
धैर्य्यं यस्य पिता क्षमा च जननी शान्तिः सदा गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
यस्यास्तीह कुटुम्बिनो वद सखे ! कस्माद्भयं योगिनः ॥१५३॥
स्थानं प्रधानं न बलं प्रधानं स्थानस्थितः कापुरुषोऽपि सिंहः ।
जानामि रे पन्नग ! ते प्रभावं कण्ठस्थितो गर्ज्जसि शङ्करस्य ॥१५४॥
शिरसा धार्य्यमाणोऽपि सोमः सौम्येन शम्भुना ।
तथापि कृशतां धत्ते कष्टं खलु पराश्रयः ॥ १५५ ॥
आपद्गतं हससि किं द्रविणान्धमूढ़ !
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्न पश्यसि घटाद् जलयन्त्रमध्ये
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ १५६ ॥

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददत् ॥ १५७ ॥

किं पाद्यं भवते भवेत् सुरसरित्पादोदकाय प्रभो !
को दीपस्तरणीक्षणाय गरुडारूढाय किं वाहनम् ।
किं भोज्यं जगदन्नदाय वसनं किं दिव्यवासोभृते
किं स्तोत्रं निगमागमाय तदलं भक्तिर्भवत्तुष्टये ॥ १५८ ॥

व्याधस्य च रणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का ?
का जातिर्विदुरस्य यादवपते उ[illegible] किं पौरुषम् ।
कुब्जायाः किमु नामरूपमधिकं किं तत्सुदाम्नो धनम् ?
भक्त्या तुष्यति केवलं हरिरतो भक्तिप्रियो माधवः ॥ १५९ ॥

स्वर्गापवर्गयोः पुंसां रमाया भुवि सम्पदाम् ।
सर्व्वासां कार्य्यसिद्धीनां मूलं तच्चरणार्च्चनम् ॥ १६० ॥

क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः ?
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १६१ ॥

प्रपद्य चञ्चलां लक्ष्मीं यः करोति न सञ्चयम् ।
धनानां चैव वस्त्राणां मूषकः स इति स्मृतः ॥ १६२ ॥

शीतभीतश्च विप्रश्च रणभीतश्च क्षत्रियः ।
धनाढ्यो दानभीतश्च त्रयो स्वर्गं न गच्छति ॥ १६३ ॥

चाणक्यमाणिक्यमिदं कण्ठे बिभ्रति ये बुधाः ।
प्रहितं भोजराजेन भुवि किं प्राप्यते न तैः ॥ १६४ ॥

इति चाणक्य-राजनीतिशास्त्रेऽष्टमोऽध्यायः समाप्तः ॥ ८ ॥

समाप्तश्चायं ग्रन्थः ॥